# प्रकाशकीय-निवेदन ।

प. पूज्य गच्छाधिपति आचार्य श्री माणिक्यसागरसूरीश्वरजी महाराज आदिठाणा वि. सं. २०१० ना वर्षे कपडवंज शहेरमां मीठाभाई गुलालचदना उपाश्रये चतुर्मास बीराज्या हता। आ अवसरे विद्वान् बालदीक्षित मुनिराज श्री सूर्योदयसागरजी महाराजनी प्रेरणाथी आगमोद्धारक ग्रन्थमालानी स्थापना थएली हती, आ ग्रन्थमालाए त्यार बाद प्रकाशनोनी ठीक ठीक प्रगति करी छे ।

सूरीश्वरजीनी पुण्यकृपाए आ 'न्यायावतार' नामनुं पुस्तक आगमोद्धारक ग्रन्थमाला ना २७ मा रत्न तरीके प्रगट करतां अमोने बहु हर्ष थाय छे ।

आनुं संशोधन प. पू. गच्छाधिपति आ. श्री माणिक्यसागर-सूरिजीनी पवित्र दृष्टि नीचे शतावधानी मुनिराज श्री लाभसागरजीए करेल छे ते बदल तेओश्रीनी तेमज जेओए आना प्रकाशनमां द्रव्य तथा प्रति आपवानी सहाय करी छे, ते बधा महानुभावोनो आभार मानीए छीए ।

प्रकाशक



न तावत् प्रकृतिरन्यत्र गच्छेत्। आत्मापि च नैव। सम्बन्धो व्यपैति चेद्, हंत! हताऽसङ्गतोक्तिः। ससङ्गे च तस्मिन् का व्याहतिस्तस्य कर्तृतायाम्। अदृष्टनिमित्तं प्रकृतेः स्वत्वमप्यात्मनो युक्तियुक्तं भवति सम्बन्धे एव बीजाङ्कुरन्यायेन भवदुदितेन। सङ्गे च प्रकृत्यात्मनो न कथञ्चिद्भेदेऽभेदे चाघटमानता। कथं च प्रकृतिर्जडा जनयेद् बुद्धिं? यदि जनयेत् कारणं स्वानुरूपं कार्यमुत्पादयेदात्मानमपि। तन्नार्थः पञ्चविंशतितमेन पुरुषेण। कथं चैतन्यानुपपत्त्यस्माऽनुमापि। स्पष्टैव प्रच्छन्ना नास्तिकता। कथं च निवर्त्तते जडा प्रकृतिः। स्वयं निवर्त्तने च स्पष्टमेव यमनियमादेर्वैयर्थ्यं, सर्वेषां मुक्तिभावश्चाकारणम्। प्रकृतिनिवृत्तेः सहेतुकत्वे च स किं पुरुषकृतः प्रकृतिकृतो वा?। आद्ये, यथा प्रकृतिनिवृत्तिकारणस्य विवेकादेः कर्तृत्वं तथैवादृष्टानामभ्युपगन्तव्यम्। अन्त्ये, प्रकृतेः स्ववधाय किं स्यान्न करणीयं विवेकादि, करणे वा न तत्संयोगोऽपि तदैव, वियोगकर्तृत्वस्वभावस्याव्याहतत्वात्। नवीनोद्भवे तु तत्स्वभावस्यावश्यमन्वेषणीयं कारणमन्यत्, तच्चात्मैवेत्यायात कर्तृत्ववादः पुनः। अन्यच्च—यथा प्रतिबिम्बेनैव भोक्तृताऽभ्युपगम्यते तथापि किमिति नाङ्गीक्रियते कर्तृता। न चास्त्यन्तरेण भोगं सम्बन्धो नूतनादृष्टेन। भोक्ता चासावात्मा चेत्, तथा कर्त्ताप्यङ्गीकरणीय. समानयोगक्षेमत्वात्। तथा च किमुच्यते—'प्रकृतिः करोति पुरुष. उपभुङ्क्ते' इति। अन्यच्च-किमपराद्धमात्मना, यत्प्रकृतिकृतमशुभादिकं भुनक्त्यसौ। संसर्गमात्रं तु भवन्मतेन मुक्तात्मभिरपि सर्वव्यापित्वादात्मनामस्त्येव। पुण्यपापनियमोऽपि प्रत्यात्म न स्यादेव चैवं, यथावत् सम्बन्धे च किमिति राटयतेऽसङ्ग एवायं पुरुष इति। चिन्तनीयं चावश्यमिदं यदुत-भवान्तरे गतिर्नारकादिका कस्य? को वा गच्छति? प्रकृतेर्जडत्वात्तस्या अभोक्तृत्वाच्चात्मनश्च सर्वव्यापित्वाभ्युपगमाद् गमनाभावात्। निमील्याक्षिणी विचारयिष्यति भवानवश्यं हास्यत्येवालीकोऽहङ्कारः स्वस्य कर्तृतां विभुतां चात्मेति। असङ्गाधर्मत्वादिकं च श्रुत्युदितं

पूज्य-आगमोद्धारकाचार्यविहितवृत्तिसनाथस्य
श्रुतधराऽऽप्तस्थविर-श्रीसिद्धसेनदिवाकरविरचित-
श्रीन्यायावतारग्रन्थस्य

# अवतरणिका

परमासत्त्वाभिसन्धिजविशिष्टबुद्धिसदानुगुण्यविभ्राजि-शेमुषीधनानां सद्गुरुचरणसमुपास्तिपूतकुशेशयानुसारिसुगुणकर-कमलेषूपदीक्रियमाणं सत्तर्ककर्कशधियामपि स्याद्वादनिकषोपल-मन्तरा मतिवैभवस्य सकलशास्त्रपारीणत्वसम्पत्तेरकृतार्थत्वसंसूचनाय वचोविधिविरचने छल-जाति-वितण्डा-हेत्वाभास-परस्परविरोधाघ्रातत्वादिदोषराहित्यसम्पत्तये च न्यायशास्त्राभिधया प्रामाण्यविनिश्चायकशास्त्राणां छन्दोवृत्तिनिग्रहार्थमनन्यथासिद्धमहत्त्वं ख्यापयदिदं यथार्थाभिधानं श्रीन्यायावतारसूत्रं महामतिप्रखरतार्किकशिरोमणि-सुरम्यविविधभावभङ्गीगर्भकवनकलानिपुणैः श्रीसिद्धसेनदिवाकर-पादैः प्रथितं कुशाग्रातिनिशितधीमतामपि बहुव्यामोहकमासीत् तदर्थ-विवेचकवृत्ते दुरूहार्थकाठिन्यप्रस्तुतसन्दर्भसङ्गतिमूलकानेकपदार्था-नामनवगमकत्वादिहेतुना ।

ततश्चोपयोगिनोऽप्यस्य पठनादिक दुरूह समीक्ष्यागमपारदृश्वभिः तात्त्विकविचारधौरेयैः सच्छ्रुतज्ञानाव्यवच्छित्तिगुणगरिमोद्भासकै-राचार्यवर्यैः बहुश्रुतसत्तमैः श्रीआनन्दसागरसूरीशपादैः शासनानु-गुणानेकभव्यजनहितकारिप्रवृत्तिशालित्वेऽपि भव्यजनानुजिघृक्षया सुन्दरसुविशदनैकदार्शनिकपदार्थानामस्वारस्योद्भावन-प्रामाण्यत्र्य-

कर्तृत्वं तदेव भोक्तृत्वं; तयोर्भिन्नावस्थाभावात् । एकान्ते हि न परस्परविरोधिक्रियायुग्मं युज्यते कथञ्चनापि । तदुक्तम्—

क्रमाक्रमाभ्यां नित्यानां, युज्यतेऽर्थक्रिया नहि ।
एकान्तक्षणिकत्वेऽपि, युज्यतेऽर्थक्रिया नहि' ॥ १ ॥ [वीत०] ति

तद्युक्तमुक्तं-कर्त्ता यथा तथैव भोक्तेति । यद्वा-नाभोक्तृणां कर्तृता, सिद्धेष्वपि तथाप्रसङ्गात् कर्त्तृत्वस्याहेतुकत्वापाताच्च । न च पाल्यमेव सतीतरेतराश्रयत्वं स्पष्टं स्यात्, कर्त्तृत्वस्य भोक्तृत्वाश्रयाद् भोक्तृत्वस्य कर्त्तृत्वाश्रयाच्चेति । बीजाङ्कुरवदितरेतराश्रयाभावात् । यतोऽन्यदेव भुज्यते कर्म, क्रियतेऽपि चान्यदेव । न च भवति कर्म-परिपाकाभावे आत्मनस्तथाविधोऽध्यवसायः । न च तदभावेऽभिनव-कर्मकरणमिति योग्यैव कर्त्तुर्भोगापेक्षेति । एवं च कर्त्तृताभोक्तृताद्व-येन जीवस्वरूपं प्रतिपाद्य तन्निबन्धनीभूतं परिणामवादं दिदर्शयिषव आह:- 'विवृत्तिमानि' ति । तत्र विवर्त्तनं-देवत्व-नारकत्व नरत्व-तिर्यक्त्वादिरूपेण परावर्त्तनं विवृत्ति —परिणाम इत्यर्थः ।

यदाह— नार्थान्तरगमो यस्मात्, सर्वथैव न चागमः ।
'परिणामः प्रमासिद्ध इष्टश्च खलु पण्डितैः ॥ तथा—
परिणामो ह्यर्थान्तरगमन न च सर्वथा विनाश इति ।
नावस्थानं च तथा परिणामस्तद्विदामिष्ट. ॥ १ ॥

न चापरिणामिन आत्मनः कर्त्तृत्वं भोक्तृत्वं वेति । विवेचितं चेदं पूर्वम् । यद्वैतत्त्रयं हेतुहेतुमद्भावेन योज्यम् । यथा यत एव कर्त्ता-ऽत एव भोक्ता, यत एव च भोक्ताऽत एव विवृत्तिमानिति । न चा-परिणामिन आत्मनो भोक्तृत्वादि युक्तियुक्तम् । अत एवोक्तमन्यत्र कषच्छेदनिरूपणानन्तरं-'तदुभयनिबन्धन भाववादस्ताप' [धर्मबिंदु] इति 'परिणामिन्यात्मनि हिंसादय' इति च । न चापरिणामं द्रव्यं

वस्थापन-निकृष्टस्वरूपनिदर्शन-विविधसर्वतोमुखीप्रतिभागमकविविध-पदार्थविवेचनादिविधया स्वरूपोपलब्धिप्रत्यलाया वृत्तेर्विरचनमकारि।

एतस्याश्च मुद्रणं परमकरुणालु-शास्त्रैदम्पर्यबोधक-गच्छाधिपति-श्रीमाणिक्यसागरसूरीशैः सुसूक्ष्मतरं संशोधनादि कृत्वाऽधिकारिबाल-जीवानां जैनन्यायप्रवेशस्य कृतार्थत्वसम्पादनरूपं महत्त्वपूर्णपदच्छे-दादिसनाथं शतावधानिविनेयावतंस-श्रीलाभसागरजितां विविध-साहाय्यसङ्कलितं विधापितमस्ति।

प्राग्जन्मोपात्तपुण्यप्राग्भारलभ्यमहापुरुषचरणनिश्रोपजीव्यात्म-शुद्धि समभीप्सावतो मम देवगुरुकृपाबलेनैतद्धि सौभाग्यमतर्कितो-पनतम्। परमानुग्रहधीराजि-श्रीगच्छाधीशकृपया देवगुरुप्रसत्तिमूल-योपलब्धमिति स्वं जनु. कृतार्थमभिमन्यमानः परमाराध्य–सुविहित-प्रष्ठ-तारकवर्य-परमोपकारि-शासनरक्षाबद्धकक्ष-शासनसुभट पू. गुरुदेव-गणिवर्य श्रीधर्मसागरजिन्महाराजचरणेन्दिवरमिलिन्दायमानोऽ-भय. सकलसङ्घसमक्षं प्रस्तुतलेखे छाद्मस्थ्यादिमूलकक्षतेर्मिथ्यादुष्-कृतदानपूर्वं निवेदयति।

वीर नि० सं० २४९१<br>
आगमोद्धारक स० १५<br>
वि० २०२१ माघ कृष्ण ३<br>
लवणकपुरं

॥ विजयतां जिनशासनम् ॥



# विषयानुक्रमः ।

| गाथा | विषयः | पृष्ठम् |
|---|---|---|
| | शाब्दप्रमाणस्य सर्वतन्त्र-सम्मतस्वरूपनिर्देशद्वारा तस्य याथार्थ्या-नुमानगातार्थ्यप्रामाण्यबीजाप्तोक्तिपभृ-तिनिष्कर्षवर्णनम् । | १२/१३ |
| ९. | विशिष्टशाब्दप्रमाणत्वेन आर्हतागमानां निर्देशः । | १४ |
| | शाब्दप्रमाणस्य स्वरूपनिर्णये आप्तत्व-सर्वज्ञत्व-स्याद्वादशास्त्रनिर्वचनाद्यनेकपदार्थवर्णनम् । | १५ |
| | प्रसङ्गतः नैयायिकानां वेदान्तिनां जैमिनीयानां चानेकाना विप्रतिपत्त्यर्हकल्पनानामसारत्वनिर्देशः । | |
| १०. | प्रमाणस्य स्वव्यवसायित्ववत् परव्यवसायित्वस्यापि युक्तिमत्त्वनिर्देश. । | १६ |
| | ज्ञानस्य प्रामाण्ये परव्यवसायित्वोपपत्तिः । | १८ |
| ११. | परार्थप्रमाणस्य भेदनिरूपणम् प्रामाण्यनिदर्शन च । | १८/१९ |
| १२. | परार्थप्रत्यक्षस्वरूपम् । | १९ |
| १३. | परार्थानुमानस्वरूपम् । | २० |
| १४. | पक्षव्याख्या तत्प्रयोगनैयत्यं च । | २१ |
| १५. | प्रक्षप्रयोगोपपत्तौ साध्यसिद्धिदोषापत्तिप्रदर्शनम् । | २२ |
| १६. | पक्षप्रयोगाकरणे धानुष्कदृष्टान्तसङ्गति. । | २३ |
| १७. | हेतोरूपन्यासफलम्, हेतुद्वैविध्यं च । | २३/२४ |
| १८. | दृष्टान्तस्य स्वरूपोपपत्तिः । | २४ |

# शुद्धिपत्रम्



| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| २ | २३ | स्त्वत्र | स्त्वत्र | २५. | ४ | वह्नि | वह्नि |
| ३. | २३ | पिवेदित्यु | पिवेदित्यु | ,, | ४ | वह्नयु | वह्नय् |
| ५. | २२ | लक्षयति | लक्षयति | ,, | ७ | दशनेन | दर्शनेन |
| ६. | २५ | स्मार्यति | स्मारयति | ,, | ६ | वद्धमा | वद्धूमा |
| ७. | ६ | भायकारेण | भाष्यकारेण | ,, | १३ | स्थाप्यते | ख्याप्यते |
| ७. | २२ | चीकृतन् | चीकथन् | ,, | १८ | ऽवद्य | ऽविद्य |
| ९. | ५ | मचक्षीत | माचक्षीत | ,, | १८ | हदादि | ह्रदादि |
| १२. | १५ | पकीर्त्तितं | प्रकीर्त्तितं | ,, | २० | च | एव |
| १३. | ११ | जडताम्व | जडतास्व | २६. | ५ | व्यर्थैव | व्यर्था स्यात् |
| १४. | १५ | निरादेवे | निरासादेवे | २९. | १८ | साध्यसत्त्वे | साधन-सत्त्वे साध्य |
| १५. | १४ | यत्ति | यत्ति | ३३. | २१ | यथाथ | यथार्थ |
| १६. | ४ | वेधे | विधे | ४०. | २१ | वाद्यक्ते | वाद्युक्ते |
| २०. | २४ | वह्न्य | वह्नय | ,, | २६ | मसन्त | मसन्त |
| २१. | २३ | निश्चनु-यात् | निश्चिनु-यात् | ४४. | ८ | मेव | मेक |
| २२. | ४ | प्रत्यर्थस्य | प्रत्याप्यस्य | ४६. | २२ | रुक्त | रुकता |
| २२. | १५ | वह्ने | वह्ने | ४६. | २३ | केवलस्व | केवलस्य |
| २३. | १५ | चान्यथा | वान्यथा | ४७. | ३ | प्रतिपेधो | प्रतिषेधो |
| २४. | १२ | नङ्गता | नङ्गताम् | ४९. | २ | मुक्त | मुक्तम् |
| २५. | २ | पित्सु | पित्सुः | ५१ | १० | ञ्जलिर्दे | ञ्जलिदे |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५२. | ११ | उव्वाओ | उप्पाओ |
| ,, | १२ | सव्वस | एक्कस |
| ५६. | २६ | त्पादेन | मादे न |
| ६१. | १ | प्रलिपित | प्रलपित |
| ,, | १४ | सर्वथा | सर्वथा |
| ६४. | १८ | कनकनाम् | कनकानाम् |
| ६५. | ६ | वासो | वासौ |
| ६७. | २० | पापात् | पापातात् |
| ,, | २४ | मिच्छत | मिच्छत्त |
| ७०. | ३ | क्वचि | क्वचि |
| ७२. | ११ | णर्थादे | णर्थदे |
| ,, | १५ | सम्प | सम्म |
| ७५. | १५ | स्यादव | स्यादेव |
| ,, | १६ | सद्द | सद्दृ |
| ७६. | ७ | पूर्वमेत्य | पूर्वमेवेत्य |
| ,, | १४ | वाच्य | वाच्यम् |
| ,, | २६ | भाऽत्रेपि | भावेऽपि |
| ८०. | १६ | त्मेवे | त्मैवे |
| ८३. | ६ | द्धि | बुद्धि |
| ८४. | २२ | कर्मण | कर्मणां |
| ८५. | ९ | कया | कतया |
| ८६. | ५ | कर्त्त | कर्त्तृ |
| ८६. | १४ | दायु | दाभ्यु |
| ९०. | ६ | गम्य | गम्यः |
| ९८. | १६ | न चास्य आदि | नान्तो न चादि |
| १०१. | २१ | हेतै | हेतैः |
| १०३. | ८ | शस्येक | शस्यैक |
| १०४. | १४ | स्कन्ध | मे स्कन्धानामेव |
| १०६. | १५ | शीलि | शीलिते |
| १०७. | ६ | वाम्य | वाऽन्य |
| ११६. | १० | सङ्घया | सङ्ख्या |
| ११९. | २६ | व्रजेज्छ | व्रजेच्छ |
| १२०. | २० | निवृत्या | निवृत्त्या |
| १२४. | ७ | भवं | भयं |
| १२८. | १६ | प्रवणे | प्रवणै |
| १२९. | १७ | विधात्र | विधाता |
| १३९. | १४ | ज्ञानादर | ज्ञानानादर |
| १४३. | २५ | भोक्तव्व | भोक्तव्य |
| १४४ | २४ | ज्ञानवणादि | ज्ञानावरणादि |
| १५२. | १ | पयुक्तं | प्रत्युक्तं |
| १५७. | ११ | आत्मानमे | आत्मनामे |



卐 णमोत्थु णं समणस्स भगवओ महावीरस्स 卐

आगमोद्धारक-आचार्यश्रीआनन्दसागरसूरिनिर्मितदीपिकाविभूषितः

तार्किकमूर्धन्य-श्रीसिद्धसेनदिवाकरप्रणीतः

# न्यायावतारः।

नत्वा नतसुरश्रेणिं प्रमाणनयदेशकम् ।
सार्वं जिनं यते न्याया-वतारं स्फुटितुं धिया ॥१॥

प्रमाणतत्त्वव्यवस्थापनार्थमिदमुपक्रम्यते । प्रमाणं-निर्दिश्यमान-स्वरूपं, तस्य तत्त्वमसाधारण स्वरूप, तस्य व्यवस्थापनं-युक्त्या निर्णीय स्वरूपोपदर्शनं तस्मै, इद-मुदढानुभवास्पदतयान्तर्यथा-वस्थिततया स्थितं प्रमाणतत्त्वं, उपक्रम्यते-शास्त्ररूपेण बहि. प्रकाश-यितुमारभ्यते इत्युपोद्घात । प्रयोजनाभिधेयसम्बन्धप्रदर्शनपरः । मङ्गलं तु प्रमाणस्य ज्ञानात्मकत्वाज्ज्ञानस्य च 'जं अन्नाणी' त्यादिवा-क्यात् निर्जरार्थकत्वात् प्रमाणशब्देनोपात्तमेव प्रतिबन्धविघातस्यैव मङ्गलार्थत्वात् । यद्वा-प्रशब्द एव मङ्गलप्रकर्षार्थत्वेन तस्य भद्रा-द्यन्तर्गतत्वात् भद्रादीनां च 'ये च भद्रादिवाचका' इत्यनेन मङ्गलार्थ-त्वानुस्मरणात् ।

अथ प्रमाणस्य स्वरूप भेदौ चाह—

प्रमाणं स्वपराभासि ज्ञानं बाधविवर्जितम् ।
प्रत्यक्षं च परोक्षं च द्विधा मेयविनिश्चयात् ॥१॥

प्रकर्षेण – संशयादिव्यवच्छेदेन मीयते–परिछिद्यतेऽर्थोऽनेनेति प्रमाणं इति लक्ष्यम् । ज्ञायते सामान्यविशेषोभयात्मकोऽप्यर्थो विशेष-प्राधान्येनावबुध्यते येन तज्ज्ञान इति लक्षणम् । विपर्ययादावतिव्याप्तेराह-'बाधविवर्जितं' तद्वत्यतद्वत्त्वबुद्धिर्बाधः। यद्वा-बाधते-पदार्थं विलोडयति 'अतत्स्वरूपतया ज्ञापनेनेति बाधः। स च विपर्ययसंशयानध्यवसायभेदात्त्रिविध' । शुक्ताविद चाकचिक्यादिमत्त्वात् रजतमिति विपरीतनिर्णयो विपर्यय । स्थाणौ उर्ध्वताद्दिदर्शनादयं स्थाणु पुरुषो वा इत्यनेककोटिकानवस्थितज्ञानं संशय । अन्यत्रोपयोगाद्गच्छतस्तृणस्पर्शज्ञानमनध्यवसाय, तेन बाधेन विशेषेण वर्जितं-शून्य यद् ज्ञानं तत् प्रमाणमिति योज्य।

अथ तत्प्रमाणतया निर्दिष्टं ज्ञानं कीदृशं स्यादिति विशिनष्टि–'स्वपराभासि' स्व-आत्मा ज्ञानमेव, परः-ज्ञानादन्योऽर्थो घटादिः, तयोरासमन्तात् सकलतद्वर्तिधर्मवत्त्वेन भासनशीलं निर्णयजननस्वभावं दीप इव इत्थम्भूतमेव ज्ञानं, अस्वाभासिनः पराभासित्वायोगात् कुम्भादिवत् । अन्येन तदाभासे तु तस्याप्यन्येनेत्यनवस्थैव । अत एव प्रामाण्याप्रामाण्ये परत एवोपपद्येते । प्रमाणं सलक्ष्य तद्भेदावाऽऽह–'प्रत्यक्षं च परोक्षं च' 'अश् भोजने' इति वचनात् अश्नाति-सर्वानर्थान् पालयति संसारस्यानादितया च भुनक्ति वेति अक्षो जीवः । यद्वा-अश्नुते-व्याप्नोति सकललोकं सर्वत्र जन्मादिमत्त्वेनेत्यक्ष जीव एव । अक्षं-जीवं प्रति गतं इन्द्रियादिनिरपेक्षतयोत्पत्तेः प्रत्यक्षं साक्षादात्मनैवोद्भूतमवध्यादि । चशब्दः स्वगतानेकभेदसूचनार्थः । अथवा–अक्षि प्रति गतं प्रत्यक्षं । व्युत्पत्तिमात्रमेवेदं, प्रवृत्तिनिमित्तं तु स्पष्टत्वमेव । चशब्दस्त्वत्रसांव्यवहारिक – पारमार्थिकद्विविधस्यापि सप्रभेदस्यास्य ज्ञापनाय । यावद्रूपिगोचरोऽवधिः, मनोमात्रगोचरं मन पर्यायं, सकलज्ञेयावभासि केवलं, इति पारमार्थिकप्रत्यक्षमवध्यादि । सांव्यवहारिकं तु साक्षात् इन्द्रियानिन्द्रियोद्भूत अवग्रहे-

ह्यपायधारणाक्रमवदेव। अपरं भेद त्वाह-'परोक्षं' पराणि-चेतनामय-त्वाज्जीवस्य इन्द्रियमनांसि, तैरुक्ता-सम्बन्धो यस्मिंस्तत्परोक्षं। यद्वा-अ-क्षाज्जीवात् पर आन्तरितं पुद्गलमयेनेन्द्रियादिना। अथवा-अक्षण इन्द्रियात्परं असाक्षादिति परोक्षम्। इन्द्रियानिन्द्रियनिमित्तो मति-श्रुतात्मको बोध। अन्ये त्वस्पष्टोऽवबोध एव। अत्र तु चशब्द. प्रत्यक्षेणास्य तुल्यकक्षतोद्भावनार्थः। भेदद्वैविध्य एव हेतुमाह—'द्विधा मेयविनिश्चयात्' मातु योग्यं मेय-आत्मदेहादि, तस्य विनिश्चयो-याथातथ्येन निर्णयः, स द्विधैव प्रत्यक्षेतरभेदेनेति। प्रमाणस्य द्वे एव विधे। पदार्थपरिच्छेदक हि प्रमाणं। पदार्थपरिच्छेदश्च द्विधैव, नान्यथेति प्रमाणमपि द्विधैव। स्मरणप्रत्यभिज्ञानतर्कानुमानाऽऽगमा अत्रैवान्तर्भूता। मतिश्रुतयोः 'आद्ये परोक्ष'मिति वचनात् परोक्षता, स्मरणादीनां च 'मतिः स्मृतिः सज्ञा चिन्ताऽभिनिबोध-इत्यनर्थान्तर'-मितिवचनात् मतित्वमिति सुस्थम्। पदार्थनिश्चयो द्विधैवेति प्रमाणमपि द्विधैव। उपमानार्थापत्त्यभावसम्भवैतिह्यप्रातिभादीन्यप्यत्रैव यथासम्भवमिति नाधिक्यं प्रमाणेयत्तायाः। यथाप्रतिज्ञात प्रमाण-लक्षणादौ निरूपिते आह चोदनाचञ्चुः—

प्रसिद्धानि प्रमाणानि, व्यवहारश्च तत्कृतः।
प्रमाणलक्षणस्योक्तौ, ज्ञायते न प्रयोजनम् ॥२॥

प्रमाणानि-स्वपराभासीनि सप्रभेदानि ज्ञानानि, प्रसिद्धानि-लोकव्यवहारपतितानि। सावधारणत्वाद्वाक्यस्य प्रसिद्धान्येव, न कथञ्चिदपि तेषां साध्यत्वम्। तथा च प्रसिद्धार्थप्रणयनप्रवण-त्वात् प्रस्तुतप्रकरणस्य नार्थवत्ता। नहि नाम बुभुक्षितोऽश्नीयात् पिपासितश्च जलं पिबेत्युपदेशः दीर्घशेमुषीकार्यम्। प्रसिद्धत्वं च प्रमाणानां अनुपदेशेनापि स्पर्शादिसवेदनाना सद्भावात्। न च विपश्चिद्वर्त्तन्येवैषा, किन्तु यावल्लोक, इत्याह—'व्यवहारश्च तत्कृत.'

दानादानादिर्लोके प्रसिद्धिमुपगतो व्यवहारोऽपि । चोऽप्यर्थे, प्रमाणनिष्पादित एव । नहि ज्ञानमन्तरेण कोऽपि कस्यापि व्यवहारः स्यात्, कुम्भादीनामपि व्यवहर्तृत्वापत्तेः । यद्वा-प्रसिद्धानि प्रमाणानीत्येतावन्मात्रमेव न, किन्तु चस्य समुच्चयार्थत्वाद् व्यवहार. प्रमाणपरिच्छिन्नो दानादिलोकव्यवहारोऽपि प्रत्यक्षादिप्रमाणकृत एवेति । ततश्च किमित्याह–प्रमाणस्य-प्रत्यक्षादिभेदभिन्नस्य लक्षणमतिव्याप्त्यव्याप्त्यसम्भवरहितोऽसाधारणो धर्मस्तस्योक्तौ-निरूपणे, प्रयोजनंसाध्यं, न-नैव, ज्ञायते-उपलभ्यते । न च निष्प्रयोजने प्रेक्षावन्तः प्रवर्त्तेरन्, तत्ताक्षते', कण्टकशाखामर्दनप्रवृत्ततथाविधपामरपुरुषवत्। इति नारम्भणीयमिदम् । तथा चोक्तं–'धर्मार्थिभि प्रमाणादेर्लक्षण नतु युक्तिमत्" ( विचार्यमित्यनुवर्त्तते ) प्रयोजनाद्यभावेन । आदिशब्दाद्धर्मध्यानादिनिर्जराकार्यपरिग्रह । अन्यच्च-लक्षणं कि विनिश्चित्योच्येत अन्यथा वा ? आद्ये, सिद्धत्वाल्लक्षणस्य किं प्रणयनम् ?। अन्त्ये, लक्षणस्यैव प्रमाणेनाविनिश्चितत्वात्तावदलक्षणत्वमिति तदुक्तिर्वक्तुर्व्यान्ध्यमेवाविष्कुर्याच्छ्रोतुर्नैव कश्चिदपि बोधमिति न वाच्यमेव लक्षणादि । तथा चात्र प्रयोग -न वाच्य लक्षणादि, निष्प्रयोजनत्वात् पितृविवाहादिवत् । निष्प्रयोजनं लक्षणादिवाक्यं, सिद्धत्वात् बुभुक्षितादि प्रति अशनाद्युपदेशवदिति । एवमाक्षिप्त आहाऽऽचार्यवर्य -

प्रसिद्धानां प्रमाणानां लक्षणोक्तौ प्रयोजनम् ।
तद्व्यामोहनिवृत्तिः स्याद् , व्यामूढमनसामिह ॥३॥

लोकव्यवहारो यतः प्रमाणनिर्मितस्ततः प्रत्यक्षादीनि प्रमाणानि यद्यपि प्रसिद्धानि तथापि तेषां वक्ष्यमाणेन अनादिनिधनास्मिकेति वाक्येन लक्षणादीन्यपि च प्रसिद्धान्येव सन्ति तथापि प्रसिद्धानां प्रमाणानां लक्षणोक्तौ अस्ति प्रयोजनं । किं तदित्याह-इह-प्रमाण-तल्लक्षणादौ, व्यामूढमनसां-निबिडजडिमावष्टब्धान्त.करणानां, तद्व्या-

मोहनिवृत्तिः-प्रमाणविषयकाज्ञानक्षपणं कृतं स्यात्। यद्यपि नास्ति प्रमाणसामान्ये व्यामोहो लोकानां, तथापि तत्स्वरूपभेदा-द्रावस्त्येवाऽसौ। तथाहि-'अविसंवादि ज्ञानं प्रमाण'मिति सौगता। अत्र संशयानध्यवसाययोर्विसंवादित्वाभावात् प्रामाण्यापत्तिः। अन्यच्च प्रमेयोपलम्भ एव ज्ञानं प्रमाणं स्यात्तदवगतथात्वेन ततस्तस्मिन् प्रवृत्तिरेव न स्यात्। किञ्च-प्रमाणस्य प्रामाण्यमविसंवादित्वमन्तरा, तच्च न प्रमाणमेव। क्षणक्षयित्ववासनायां तु को ज्ञानवान् कश्चाविसंवादित्वनिर्णेतेति चिन्त्यमिदम्। 'अर्थोपलब्धिहेतुः प्रमाण'मिति नैयायिकादय। अत्र हेतुर्यदीन्द्रियकारकसाकल्यादयस्तर्हि तेषामचेतनत्वान्न प्रमाणत्वम्। न चेन्द्रियाण्युपलब्धृणि, तेषां विगमेऽपि तदुपलब्धार्थानुस्मृतेः। 'अपूर्वार्थाधिगन्तृ प्रमाण'मिति मीमांसका। तेषां मते च स्मृतिस्तद्धेतुकं चानुमानादिकं न प्रमाणं स्यात्। एवं 'कल्पनापोढं अभ्रान्तं प्रत्यक्षं' इति बौद्धाः। 'इन्द्रियार्थसन्निकर्षोत्पन्नमव्यभिचारि व्यवसायात्मकं निर्व्यपदेश्य ज्ञानं प्रत्यक्षं' इत्यक्षपादानुयायिनः। 'अक्षाणां सतां सम्प्रयोगे आत्मनो बुद्धिजन्म प्रत्यक्ष'मिति मीमांसकाः। एवमेवान्येष्वपि लक्षणेषूह्यम्। भेदेऽपि व्यामोहो, यथा-'प्रत्यक्षानुमाने प्रमाणे' इति तच्चनीकाः, 'प्रत्यक्षानुमानोपमानशब्दा प्रमाणानि' इति गौतमीया, प्रत्यक्षानुमानशब्दा प्रमाणानीति काणादा कापिलाश्च, 'प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यभावा प्रमाणानीति जैमिनीया, श्रुतिरेव मानं नान्य' दिति वेदान्तिन, 'प्रत्यक्षमेवे'ति लोकायतिका, इत्यवितथमेवोक्तं यत्प्रमाणलक्षणाद्युक्तौ तद्व्यामोहनिवृत्तिरिति। अथ पूर्वोक्ते प्रमाणे लक्षयति—

अपरोक्षतयाऽर्थस्य, ग्राहकं ज्ञानमीदृशम्।
प्रत्यक्षमितरज्ज्ञेयं परोक्षं ग्रहणेक्षया ॥ ४ ॥

अर्यते-गम्यते इत्यर्थ-आत्मदेहादि, तस्य अपरोक्षतया-इन्द्रिया-

निन्द्रियनिमित्तोद्भवभिन्नतया साक्षादात्मना स्पष्टतया वा ग्राहकं-ज्ञापकं यज्ज्ञानं ईदृश ग्रहणेक्षया-ज्ञानापेक्षया ग्रहणप्रकारतो वा प्रत्यक्षं ज्ञेय-मिति । आद्यपक्षेऽवध्यादि, अपरस्मिंश्च सांव्यवहारिकप्रत्यक्षमवध्यादि च । परोक्षलक्षणमाह-इतरत्-प्रत्यक्षाद्भिन्नस्वरूप इन्द्रियानिन्द्रियोत्प-न्नेनास्पष्टेन वाऽर्थस्य ग्राहकं ग्रहणेक्षया परोक्षं ज्ञेयम् । आद्ये मति-श्रुते, परस्मिन् स्मृत्यादि । अत्राऽऽबालगोपालाङ्गनाप्रसिद्धे परोक्ष-रूपे मतिश्रुते इति कृत्वा परोक्षभिन्नत्वेन प्रत्यक्षं लक्षितम् । अत एव वाचकमिश्रैरपि प्रवचनार्थसङ्ग्रहं चक्राणैश्चक्राते एवं सूत्रे-'आद्ये परोक्षं प्रत्यक्षमन्यत्' ( मतिश्रुताभ्यामन्यत् अवधि-मनःपर्याय-केवल-लक्षणं ज्ञानत्रयं प्रत्यक्षमित्यर्थः ) । यद्वाऽऽश्रयाश्रयिभाववारणायापरोक्षतयेति । नहि प्रत्यक्षलक्षणकरणादृते प्रत्यक्षत्वं सिद्धं स्यात्तया तत्सिद्धिमन्तरा च लक्षणे प्रत्यक्षता विशिष्टा न शिष्टतास्पदम् । न च वाच्यं तथापि अन्योन्याश्रयस्तु दुरुद्धर एव । यतोऽत्र परोक्षभिन्नतया प्रत्यक्षं प्रत्यक्षेतरच्च परोक्षमिति लक्षणद्वय लक्षितं, परोक्षशब्दस्यास्पष्टार्थत्वात् । स्पष्टास्पष्टत्वे तु प्रसिद्धे एव लोके । न च तर्हि स्पष्टतयेत्येव वाच्यं, नार्थो 'परोक्षतये'त्यस्य । तथाहि-प्रतिपाद्यमाने सामान्यलोकेऽवध्या-देरननुभूयमानत्वेन तत्र स्पष्टास्पष्टत्वशङ्का न निवर्त्ततास्पष्टता वा तस्यावबुध्येतेति पक्षद्वये लक्षणव्याप्तिः सम्यक् स्यात् । न च प्रत्यक्षपरोक्षभिन्नं त्रितयं किञ्चिदपि प्रमाणमस्ति, यस्य लक्षणं विदध्याद्विचक्षणकोविदः । न च 'पमाणे चउव्विहे' इत्याद्यनुयोग-द्वारादिसूत्रविरोधः । तत्र हि व्यवहारलक्षणनयवादेन परोक्षान्तर्भूता-नामपीतरेषां पृथक्करणं, लोकानुरोधपरत्वात्तस्य । न चैवं स्मरणप्रत्य-भिज्ञातर्काप्रामाण्यम् । तन्मतेन अनुमानाङ्गतया तत्प्रामाण्येन तेषामपि प्रामाण्याभ्युपगमात् । प्रत्यभिज्ञातो हि तर्कबलप्रतिष्ठितमन्यथानुपपन्न-त्वं हेतोः सह साध्येन स्मा याति । ततश्च साध्यनिश्चयः । न चैव-मत्राप्येवमेव कार्यम् । व्यवहारस्य हि लोकोपचारमात्रप्रियत्वात्तस्य

तथाभ्युपगम स्याद्यदाह-'नयवादान्तरेण प्रत्यक्षानुमानोपमानागमाश्च-त्वारि प्रमाणानि' परं यथास्थितपक्षनिरूपणे तन्निरूपणहेतुभूत एक-देशो नोपयुक्त इति । भेदो हि परस्परवैलक्षण्येन स्यात् तच्च प्रत्यक्ष-परोक्षयोरेव, नान्येषां । परोक्षभेदास्तु भवन्तस्तान्न कोऽपि कोपिता-श्रयं कुर्यादिति । अत एव स्वतन्त्रं प्रमाणभेदयोग्यत्वाङ्गीकरणाद-प्रमाणान्येव वा तानीत्युक्त' भा यकारेण । सुप्रतिष्ठितव्यवस्था हि 'तत्प्रमाणे' (मतिश्रुतावधिमनःपर्यायकेवललक्षणं ज्ञानपञ्चकं आद्ये परोक्षे प्रत्यक्षमन्यदिति प्रत्यक्षपरोक्षे द्वे एव प्रमाणे इत्यर्थः) इति सूत्रेण स्पष्टमेव ख्यापिता । न चैवं 'इंदियपच्चक्खे' इत्यादि नन्दिसूत्रीय-पाठेन स्पष्ट एव विरोधः समधिरोहेत् । तत्र ह्यत्रत्यद्वितीयव्याख्यान-वत् सांव्यवहारिकत्वेन स्पष्टत्वमङ्गीकृत्यैव तथाव्याख्यातमन्यथा कथं तत्रैव 'पच्चक्खं तिविहं' इत्याद्यचीकृतन् देववाचकवर्या. । अत्र पश्चा-दुद्दिष्टमपि परोक्षं लोकोपयोगित्वेनादौ विवेचयति । तत्रापि संस्कारो-द्भूतं तदिति ज्ञानं स्मरणं, अनुभूतिस्मृत्युद्भवं सङ्कलन प्रत्यभिज्ञा, अन्वयव्यतिरेकव्याप्तिस्तर्क इति लक्षणवतां स्मरणादीनां क्षुण्णतया प्रायस्तात्त्विकविप्रतिपत्तिविषयाभावात् तानुल्लङ्घ्य तदङ्गीभूतं अनुमानं लक्षयँस्तत्प्रामाण्यं निरूपयँश्चाह--

साध्याविनाभुवो लिङ्गात् साध्यनिश्चायकं स्मृतम् ।
अनुमानं तदभ्रान्तं, प्रमाणत्वात् समक्षवत् ॥ ५ ॥

साधयितुमिष्टं साध्यं – वह्न्यादि, अप्रतीतानिराकृताभीप्सितं, तेन विना न भवतीति क्विपि साध्याविनाभू., धूमादिस्तादृशात् लिङ्गात्-लिङ्गयति-गमयति, असिद्धमिति लिङ्ग' तस्मात्, साध्यस्य-पूर्वोक्तस्य, निश्चायकं-निर्णयापादकं यज्ज्ञानं तदनुमानं स्मृतं । अनु-माता हि पूर्वं लिङ्ग' प्रत्यभिज्ञाय तस्य तर्कबलापन्नं साध्याविनाभावं च संस्मृत्य साध्यसत्तामाकलयति इति लिङ्गजन्य एव साध्यनिश्चयः ।

अत एव च हेतौ पञ्चमी। स एव चानुमानम्। अत्र च लिङ्गात् साध्यनिश्चयोऽनुमानमित्येव प्रकृतम्। साध्याविनाभुव इति तु लिङ्गस्य स्वरूपोपदर्शनेन त्रिरूपतादिनिराकृतये। स्फुटयिष्यति च अन्यथानुपपन्नत्वमिति हेतुलक्षणविवरणावसरे एतत्। परामर्शजन्यत्वे त्वनुमानस्य चन्द्रवदाकाशं जलचन्द्रदर्शनात्, भविष्यत्युदयो मृगशीर्षाणां अत्र कृत्तिकोदयात् इत्याद्याकारानुमानप्रथा वितथा न स्यात्। लिङ्गज्ञान करणं, व्याप्तिर्व्यापारः। केचित्तु व्याप्तिधीः करणं, परामर्शो व्यापारः। अत्र चार्वाकश्चर्चयाञ्चक्रे-अन्यथाऽनुमानप्रथा व्यभिचारित्वात्। अव्यभिचारि हि प्रमाणं प्रमाणतामभिप्रेतं प्रत्यक्षादेरिव। न चेदं तथा। तस्मादनुमानोद्भवन्मान भ्रान्तमेव। तन्नेत्याह-तदभ्रान्तं-पूर्वं लक्षणादिना निर्दिष्टं अनुमानं न-नैव भ्रान्तिमत्-अयथार्थतावत्। अत्र हेतुमाह-प्रमाणत्वात्-बाधरहितज्ञानात्मकत्वात्तस्य। यथोद्योतकर आदित्य उलूककुलोदितपूत्कारपरम्पराभिरपि तमस्ततिवितायी न भवति। एवमत्रापि स्वपराभासि बाधवर्जितज्ञानमयत्वेनानुमानस्याभ्रान्तत्वं भवन्न नास्तिकमस्तिष्कनिर्गतन्यक्कारैरन्यथा भवति। यो यस्य नियतः सम्बद्धः स तं अदृष्टमपि ज्ञापयत्येव, कोऽत्र व्यथा। क्वचिद्भ्रान्तत्वदर्शनेन च यदि तत्सर्वथा प्रमाणपथोत्तीर्णं तदा मरुमरीचिकानिचयदर्शने जातं जलज्ञानमपि भ्रान्तं निभालितमिति यावत्प्रत्यक्षस्यापि प्रामाण्यानभ्युपगमः श्रेयान्। अथ च शून्यवादिनं प्रति प्रतिपादयता प्रत्यक्षस्यापि प्रामाण्यं भवता तत्र हेतुर्वाच्य एव, स्वमनस्यपि प्रत्यक्षस्य भ्रान्तत्वाभ्रान्तत्वनिश्चयोऽप्रामाण्यप्रामाण्यहेतुनैव क्रियेत। किञ्चानपेक्ष्य स्मरणादीन् कोऽत्र प्रत्यक्षेऽपि प्रामाण्यनिर्णायकः। तेषां च मानत्वे सुतरामनुमानस्य मानता। यदि च न तेऽनुमानं प्रमाणतास्पदं, तर्हि प्रत्यक्षस्यापि देहि जलाञ्जलिं प्रामाण्यायेत्यभिप्रेत्याह-समक्षवत्। यथाहि-प्रत्यक्षस्याविसंवादित्वं तद्दर्शितार्थाविसंवादात्त्वयाऽभिधीयते, तथैव धूमादेर्वह्न्याद्यनुमानस्यापि तथात्वं विनिश्चित्य तदपि तथेति किं न निर्णीयते निर्णयनिरतेन?

यत्राविसंवादित्वं तत्र प्रामाण्याभ्युपगमे का ते त्रपा ? अन्यथा स्वजनकादिशङ्कया सशङ्कोत्पत्तिकस्त्वमिति केषां न हास्यास्पद इति विवेचयतु। एवं निर्लोठितो वादो उल्लुण्ठीभूय त्रुडतो जलमुष्टिरिव स्वनिस्ताराय प्रत्यक्षस्याप्यप्रामाण्यं कीर्त्तयेत्। यद्वा – मानशून्यशून्यवाद्विवादपरः प्रमाणमात्रद्वेषित्वेन तस्य तथात्वम चक्षीत। अथवा निरन्तरश्रद्धातमस्तत्यवगूढहृदय पशुविशसनशासनागसी श्रुतिमेव मानतया समुद्दिशन् जगद्याथातथ्यावगतिकारकमिति न तत्प्रामाण्यं मन्वीतेति तान्प्रत्याह—

न प्रत्यक्षमपि भ्रान्तं, प्रमाणत्वविनिश्चयात्।
भ्रान्तं प्रमाणमित्येतद्विरुद्धं वचनं यतः ॥६॥

प्रत्यक्ष – स्पष्टतान्वितमवध्यादि इन्द्रियानिन्द्रियोद्भवं सांव्यवहारिकं वा समक्षं। अपिनाऽनुमानादिप्रमाणसङ्ग्रहः। भ्रान्तं-अप्रमाणमिति न-नैव वाच्यमिति गम्यते। यद्वा–पूर्वश्लोकान्तर्गतं दृष्टान्तं शुशोधयिषयाऽऽह–'प्रत्यक्षमपि' साध्यसाधनव्याप्त्यास्पदं हि दृष्टान्त। तच्चात्र प्रत्यक्ष लोकायतिकैरपि तस्य प्रमाणतया स्वीकृतत्वात् तथापि तत्प्रामाण्यविप्रतिपत्तौ तस्य तन्निश्चिन्वन्नाह--'प्रत्यक्षमपि भ्रान्तमिति न, कुत ? इति चेदत्र हेतुमाह– 'प्रमाणत्वविनिश्चयात्' (प्रमाणत्व) प्रमाणस्य हि स्वरूपं बाधवर्जितज्ञानत्व, तस्य विशेषेण-समस्तवादिसम्मततया विविध स्पृष्टं रसितं घ्रातं दृष्ट श्रुतं मतं वा मयेति स्वानुभवेन निश्चयात्–सन्देहराहित्येनानुभवनात्। उच्यते च विज्ञवृन्दारकैर्नहि प्रत्यक्षेऽनुपपन्न नाम। अनेन दृष्टान्ती-कृतस्य प्रत्यक्षस्य साधनविकलता। प्रमाणत्वलक्षणो हेतुर्यथा प्रत्यक्षे विद्यते यथा च तत्र भ्रान्तम्। एवं अनुमानमपि प्रमाणत्वेन हेतुनैव–नायथार्थ। भवति चात्रान्तर्व्याप्ति, भ्रान्ते प्रमाणत्वस्य सर्वथैवानुपपन्नत्वात्। अथ प्रत्यक्षे प्रमाणत्व भवतु, परं भ्रान्तत्वन

तस्मान्निर्गतं, इति साध्यविकलता दृष्टान्तस्याऽविकलैवेत्यत्राह — 'भ्रान्त' मित्यादि। यद्वाऽभ्रान्तत्वप्रमाणत्वयोरन्तर्व्याप्तावुद्भवन्तीमारेकां निरस्यन्नाह—'भ्रान्त' मित्यादि। भ्रान्त-अयथार्थं, प्रमाणं—यथार्थं ज्ञान बाधवर्जितं स्वपराभासि इत्येतत् एकस्यैव परस्परविघातकधर्मवत्त्वाभ्युपगमपरं वचन—वाक्य यत. विरुद्धं, माता मे वन्ध्येत्यादिवद् विरुद्धताव्रातम्। न हि यद्भ्रान्त तत्प्रमाणं यत्प्रमाणं तद्भ्रान्तं वा भवितुमर्हति। तद्वक्ता च नाप्नोत्यापवर्गद्युपवेशनार्हतां, अभ्युपगतापलापेन विरुद्धतानवबोधेन वा निग्रहस्थानगतत्वात्तस्य। अत्रेदमैदम्पर्यम्-भ्रान्तत्वविरुद्धस्वभाव हि प्रमाणत्वम्। तच्च प्रत्यक्षे समवेयत भ्रान्तत्व निवर्तयेत् तस्मात् स्वव्यापकं चाभ्रान्तत्वं समानयेत् इति निश्चितेऽभ्रान्तत्वप्रमाणत्वयोर्व्याप्तिभावे सङ्कलितप्रमाणत्वान्न प्रत्यक्षं भ्रान्त। तद्वदेव चानुमानमपि प्रमाणत्वाश्रय इति न भ्रान्तत्वास्पदम। इति सुस्थित अनुमानस्य प्रसङ्गात् प्रत्यक्षस्यापि प्रमाणत्वम्। अथ प्रमाणलक्षणशुद्धये ज्ञानमेव तत्त्वं नान्यदिति सिद्धान्तयतो बौद्धविशेषान्, एकमेव ब्रह्म द्वितीय नास्तीत्यभिनिविष्टान् प्रत्यक्षप्रेक्ष्यमाणजगज्जालमालमाचक्षाणान् वेदान्तिनः शिक्षयन्नाह —

सकलप्रतिभासस्य, भ्रान्तत्वासिद्धितः स्फुटम्।
प्रमाणत्वविनिश्चायि, द्वयसिद्धौ प्रसिद्ध्यति ॥७॥

प्रमाण स्वपराभासि बाधवर्जितं ज्ञानमिति निर्णीतं प्राक्। तादृशस्य सकलप्रतिभासस्य—समग्रज्ञानस्य, स्फुटं-प्रकटं यथा स्यात्तथा निश्चितं 'भ्रान्तत्वासिद्धित.' प्रमाणत्वलक्षणव्यापकतयाऽभ्रान्तत्वलक्षणव्यापकवत्त्वनिश्चयेन भ्रान्तत्वव्याहते. प्रत्यक्षादिज्ञानस्याभ्रान्तत्वसिद्धि। अभ्रान्तं च सकलमपि ज्ञानं स्वपराभासस्वरूपमेव, तेनैव तस्य तत्त्वनिर्णयापादनात्। अत एवाह-'प्रमाणत्वविनिश्चायि' ज्ञाने प्रमाणत्वनिर्णायकं ह्यभ्रान्तत्वम् तच्च पदार्थयाथार्थ्यानुपा-

त्येव स्यादन्यथा भ्रान्तत्वापत्तेः। पदार्थयाथार्थ्यानुपातित्वं च द्वय-सिद्धौ-ज्ञानज्ञेयलक्षणपदार्थयुग्मसम्भव एव प्रसिद्धयति-प्रकर्ष याथातथ्येन अनाविलसिद्धिपदवीमध्यारोहति । नहि तमस्तोममनपाकुर्वन् दरीदृश्यमानमर्थजातं चासाक्षात्कुर्वन् दीपो दीपतां लभते । एवमत्रापि ज्ञेयम्। आत्मपुद्गलाद्यर्थजातं यदि न स्यात्तर्हि दृश्याभावात्कथं दर्शनं ? । सति दर्शनाङ्गीकारेऽवश्य दृश्याङ्गीकार, करणस्य कर्माविनाभावित्वात्। 'द्रष्टा च प्रमाते'त्यादिना श्लोकेन निगदिष्यति। तन्नात्र तच्चर्चा । परमार्थतस्तु दध्यानयनचोदनया तदाधारानयनचोदनावत्करणरूपे ज्ञानेऽङ्गीकृते ज्ञाता ज्ञेय चावश्यतयाङ्गीकार्यम्। स्वतन्त्र: कर्त्ता, व्याप्य कर्म, साधकतमं च करणमितिव्युत्पादितत्वाद्विपश्चितापश्चिमैः । अत्रेयं भावना – प्रमेयाव्यभिचारित्वं हि प्रमाणस्य प्रमाणत्वम्। तच्च न प्रमेयमन्तरा ।तथाभवद्धिज्ञानमप्रमाणमेवामन्यते मुनिभि: भ्रमस्यैतल्लक्षणत्वात् । सङ्गीर्यते च ज्ञानस्य प्रमाणतोभाभ्यामन्यथा स्ववचसैव स्वमतानृतत्वाङ्गीकार–प्रसक्ते । अप्रामाणिकस्य तथात्वादेव। न च ज्ञान कर्तृ ज्ञान कर्म ज्ञानेन करणेन जानातीति क्रियादियोग्यतेति नार्थोऽन्यज्ञेयेनेति वाच्यम् ज्ञानस्यैव तावत्स्वपराभासित्वात् सत्येच परस्मिंस्तस्य तथात्व, इति द्वयसिद्धयनान्तरीयकमेव प्रमाणत्वम्। यद्वा-पूर्वश्लोके क्रमेण साधनविकलता साध्यविकलताऽनुमानप्रामाण्यव्यवस्थापने प्रत्यक्षरूपस्य दृष्टान्तस्य पराकृता। अधुना तूभयविकलता तस्यातन्यते 'सकले'त्यादिना। व्याख्या चैवं कार्या- सकलप्रतिभासस्य–समस्तस्पष्टज्ञानस्य स्फुटं प्रतिप्राणि स्वसंवेदनसिद्धतया भ्रान्तत्वा सिद्धित – अयथार्थ–ज्ञानानुभवात, प्रमाणत्वविनिश्चायि-प्रमेयाव्यभिचारित्वनिर्णयकारकं अभ्रान्तत्वमिति गम्यते, तत् द्वयसिद्धौ–प्रत्यक्षप्रमाणरूपे दृष्टान्तेऽ–भ्रान्तत्व – प्रमाणत्वलक्षणसाध्यसाधनयोर्व्याप्तत्वेनोपपन्ने, प्रसि – द्धयति–युक्त्युपपन्नं भवति । प्रत्यक्षप्रमाणे प्रमाणमभ्रान्तत्वाविना–भूतमिति निर्धारितम्। प्रमाणत्वं चानुमानेऽपि, प्रमेयाव्यभिचारि-

ज्ञानमयत्वात् निश्चितमित्यनुमानेऽप्यभ्रान्तत्वसिद्धि । एवं परोक्षान्तर्गतानां स्मृत्यादीना यथायथ लक्षणादि विधाय तथाभूतस्यैव परलोकविधिसौधस्तम्भभूतश्रीशाब्दप्रमाणस्य लक्षणमाविश्चिकीर्षुराह तात्रल्लोकलोकोत्तरसामान्यं शाब्दलक्षण—

दृष्टेष्टाऽव्याहताद्वाक्यात्परमार्थाभिधायिनः ।
तत्त्वग्राहितयोत्पन्नं, मानं शाब्दं प्रकीर्त्तितम् ॥८॥

दृष्टं-चक्षुर्दर्शनादिना घटपटादि, इष्टं-सुखादि, ताभ्यामव्याहतात्-अविरुद्धाद् एतादृशात् वाक्यात् – वर्णशब्दादिसमूहात्मकादर्थद्योतकात्, उत्पन्न ज्ञानमितिगम्यम् । शाब्द मान प्रकीर्त्तितमिति सम्बन्ध । पुनः कीदृशाद्वाक्यादित्याह-'परमार्थाभिधायिन ' परमार्थो-यथास्थितत्वं तात्पर्यं वा तदभिधानशीलं परमार्थाभिधायि, तस्मात् । कथमुत्पद्यते ? इत्याह-यद्वा-षडपूपा दश दाडिमानीत्याद्यसम्बन्धानामपि प्रामाण्यप्राप्तौ प्रोक्तवान्-'तत्त्वग्राहितया' तस्य वाक्यस्य तत्त्वं-स्वरूपं, यथावस्थितार्थत्वं, तद्ग्रहणशीलतया यदुत्पन्नं-वाक्यश्रवणातः प्रादुर्भूतमात्मनि ज्ञानं, तत् शाब्दं-आगमाख्य, मानं-प्रमाणं प्रकीर्त्तितं-प्रकर्षेण युक्तियुक्ततया गदितं, प्रमाणलक्षणलक्षकैः। अत्र च नास्तिकमतानुयायिनां दृष्टाऽव्याहतत्वमस्तीतीष्टेति । नहि जीवाद्यपलापश्चेतनावर्ता प्रतिप्राणिस्वसवेदनससिद्धतया जीवस्येष्ट. केषाञ्चिदपि । परलोकमोक्षादीष्टाऽव्याहतत्वेऽपि बौद्धाक्षपाद–कपिल–कणाद-वेदानुयायिनां प्रत्यक्षादिप्रमाणप्रथासिद्धस्याद्वादापलापलीनत्वाद् दृष्टेति । तादृशत्वं बोटिकादिनिह्नवनिकरस्य स्यादित्याह-'परमार्थेत्यादि । नहि तेषां स्वात्मद्वेषिणा वचनानि पदार्थस्य यथार्थतापराणीति । सत्यपि वाक्यस्य दृष्टेष्टाव्याहतत्वे परमार्थाभिधायित्वे च न सर्वे श्रोतारः समभावप्रतिश्रोतार सम्पद्यन्ते । यत आह—

'एकरसमपि तद्वाक्यं,वक्तुर्वदनाद्विनि सृतं तच्च ।
नानारसतां गच्छति, पृथक् पृथग् भावमासाद्य' ॥१॥

अत एव च न्यगादि वाचकवर्यैः—

'न भवति धर्मः श्रोतु सर्वस्यैकान्ततो हितश्रवणात् ।' इति आह 'तत्त्वग्राहितये'ति । एत्र चार्जवादयुक्तेष्युक्ते यदनुरागिभि शिष्यै शिष्यतेऽन्यथाकारं निरन्तरभक्तेभ्योऽङ्गीकुर्वते च ते तथेति । तत्र शाब्द मानं, तल्लक्षणोत्तीर्णत्वात्तस्य । लोके तु जनकादिस्तथाभूत एव । यतो नासौ पुत्रादिभ्यो दृष्टेष्टव्याहतरूपरमार्थाभिधायि वाक्यमभिधत्ते । पुत्रादीनां च तत्त्वग्राहितया या बोधोत्पत्ति, सैव लौकिकं शाब्द मानमिति । यत्तु क्वचिद्वाक्यादिकमेव शाब्दतया जेगीयते, तत्कारणे कार्योपचारं विधायैव । अन्यथा कथ जडतास्वरूपस्य वाक्यस्य व्यागृणीयात् मानताम् । मानस्य ज्ञानरूपत्वादेव । भवति च यत्र यो दृष्टेष्टाऽव्याहतवाक्य. प्रामाणिकबोधोत्पादकः स एव, निपुण-वैद्यादिवत् । न चानुमानेऽन्तर्भावनीयमिद, व्याप्त्यादिभावकल-नाभावात् । स्पष्टं तदुल्लेखात् । न चानुमानं तदभावे भवतीति । अन्यच्च – वक्त्रधीनप्रामाण्यमिदं, तत्तु हेत्वाभासशून्यताद्यत्थम् । किञ्च-प्रत्यक्षपूर्वक तत् व्याप्तिहेतुकं च, इद तु प्रकरणादिना विशिष्ट-बोधजनकमेव सङ्केतपूर्वकं च । "अनुमाया स्थिता चैव, उक्तेः प्रामाण्यता पृथक् । एका व्याप्तिभवाऽन्या तु, सङ्केतोत्था यत स्मृता ।"

अथ लोकोत्तरं विशिष्टत्वात्सविशेषं लक्षयन्नाह—

आप्तोपज्ञमनुल्लङ्घ्य-मदृष्टेष्टविरोधकम् ।
तत्त्वोपदेशकृत् सार्वं, शास्त्रं कापथघट्टनम् ॥९॥

रागद्वेषमोहानामात्यन्तिकः क्षय' आप्तिस्तद्वानाप्तः । न च प्रति-

प्राण्युपलब्धे रागादिमात्राया, न तद्विहीन कोऽपीति । तत एव न दरीदृश्यमाना आप्ता प्राणिन । कस्यचित् क्वचिन् कदाचित्तु रागाद्यभाव स्वसंवेदनसंसिद्ध इति नापलप्य । यस्य तु सर्वत्र सर्वदा च तदभाव., स आप्त । रागद्वेषमोहानामंशतः क्षयोऽनुभवसिद्धगुणोत्पत्त्यनुमानप्रमित इति तत्क्षयः सर्वथापि स्यात् । तद्वाँश्च स । न च ज्ञानादीनामंशत आवरणोपलब्धे पूर्वोक्तवत् सर्वथावरणमपि जाघट्येत-। तेषा नाभिप्रदेशानामंशतोऽपि कदाचिदप्यावृतेरभावात् ज्ञानादीनां । अन्येषां तु तेषा केषाञ्चिज्जीवाना तथाभावोऽभ्युपेयत एव तारतम्यना रागादेरिति सर्वथाप्यभावस्तस्य किं नोरीकार्य कृतिभि । आप्तेनोपज्ञं - आदौ निरूपित तीर्थस्थापनावसरे, पश्चात्तु छद्मस्थोऽपि गणभृदादिर्निरूपयेत् । भवति चाप्तोपज्ञतयैवागमस्य प्रामाण्य, अन्यस्यानाभोगस्यापि सम्भवात् । 'नहि नामाऽनाभोग छद्मस्थस्येह कस्यचिद्भवती'ति वचनात् । अन्यच्च धर्माधर्मतद्धेतुतन्निर्जरणात्मतदध्यवसाय परलोकाद्यतीन्द्रियपदार्थदर्शनपटिष्ठ एव धर्मादीनां स्वरूपप्ररूपणायां प्रमाणतामापद्येत । तथाविधरागादिनिरा दिवेति । उच्यते च-'जिणपन्नत्तं तत्तं' । यत्तु 'विना गुरुभ्यो गुणनीरधिभ्य' इति । तत्तेषां प्राधान्यख्यापनाय। अन्यथा तेषा स्वातन्त्र्येऽन्धपरम्परान्याय. समापतन् केन वार्येत ? । आप्तोपज्ञत्वादेवाह-'अनुल्लङ्घ्यं' ग्रन्थार्थनिपुणैरपि वादिभि प्रतिभावद्भि कुयुक्तिशतेनापि नाभिभवनीयम्। न चाविसंवादिप्रमाणप्रतिपन्नोऽर्थो निह्नूयतेऽनात्मनिह्नवेन। द्रव्यपर्यायोभयात्मकत्वं वस्तुनः नित्यता द्रव्यस्येतरता पर्यवस्येत्यादि च नानुभूयतेऽरक्तद्विष्टै किं ? इति सुष्ठूक्त 'अनुल्लङ्घ्य' अनेनैवाप्तोपज्ञत्वसिद्धे. । तथापि कथमितिचेदाह'अदृष्टेष्टविरोधक' दृष्टा-इन्द्रियानिन्द्रियाभ्यामवगता घटरूपाकारादय, इष्टाश्चानुमानाऽऽगमान्यथानुपपत्तिभिरवश्यन्तथाङ्गीकृता, तैरविरोधक-विरोधानाघ्रातम् । नहि यथावस्थितार्थपरिज्ञानस्तत्स्वरूपमन्यथाऽन्यथाऽऽचक्षीत, येन

तद्वच: पूर्वापरविरोधव्याहतिं भजेत् । भवति चैकान्ताभ्युपगमपराणां शकुन्तपोतन्यायेन पूर्वापरविरोधाङ्गीकरणं स्याद्वादाङ्गीकारात् । तथाहि-सर्वथाऽनित्यत्ववादी बौद्ध सन्तानं, साङ्ख्य प्रकृतेस्त्रिगुणात्मकतां, यौगश्चित्ररूपस्यैकानेकरूपतां, वेदान्ती चात्मनो बद्धाबद्धत्वं वदन् प्रावृट्प्रवासीव स्खलन् पदे पदेऽनन्यगत्या स्वीकुर्वते अनेकान्तं, प्रान्तेऽन्यथाभूतार्थस्वीकारात् । न चेयं व्यवस्था निरस्तनिखिलदोषनिकराप्तनिरूपिते श्रीमौनीन्द्रप्रवचने । न चैकस्यैवार्थस्य परस्परविरुद्धसदसदात्मकतामभ्युपगच्छन् कथमिव भवान् न विरोधाघ्रातोद्गाता विरोधकव्याख्यातेति । निरपेक्षविरुद्धधर्मस्यैकत्रासङ्गते: । सापेक्षस्य तु सर्वैरपि वाङ्मयवेदिभिरविगानेनैकत्राङ्गीकृतिः कृतैवास्ति । अन्यथा स्वरस्यैकस्यैव ह्रस्वदीर्घादिविधान, पीयमानं मधु मदयतीत्यत्र कर्तृकर्मलक्षणकारकद्वयसयोगानन्यता मधुन. । देवदत्तस्य पितृपुत्रापेक्षया क्रमेण पुत्रपितृत्वव्यपदेश कथमिव घटामियर्त्ति तेषामनुभवापलापिनां पापात्मनां । पुनर्विशिनष्टितत्त्वोपदेशकृत । तत्त्वे–जीवाजीवौ, तयोरेव परमार्थसत्त्वात् शेषस्य तयोरेवान्तर्भावात्, हेयोपादेयादिस्पष्टतावबोधाय शेषाणामाश्रवादीना तत्त्वत्वेनोपन्यास । अत एव 'सव्वमिण दुप्पडोयार' इत्यागम सङ्गच्छते । तयोरुपदेशोऽनुभवानुमानहेतुयुक्तिकारणोदाहरणनयभङ्गै· स्वरूपप्रज्ञापनम् । नह्यत्र मौनीन्द्रे प्रवचने वचनगौरवतामात्रादादरणीय वस्तु, दृष्टेष्टाविरुद्धत्वस्यैव तल्लक्षणत्वात्तत्कारक यथार्थख्यात्रिति यावत् । न तु द्रव्येभ्यो गुणकर्मणां भिन्नत्वं, सङ्कल्पितसमवायेन च तैस्तयो सम्बन्धं, त्रिभ्योपि सामान्यस्थाऽ तथाविधा तथाविधतां असम्बद्धसम्बद्धतां, अभावस्यातिरिक्तता, तमश्छायान्धकाराणामभावतां, सुवर्णस्य तैजसता, चक्षुष' प्राप्यकारितां, शब्दस्याकाशगुणता, जीवमात्रस्य विभुतां, मनसोऽणुता जगत ईश्वरकर्तृतां, सच्चिदानन्दहीना मुक्ति, आकाशादीना एकान्तनित्यतां, द्व्यणुकादेरेकान्तानित्यतां, शब्दसयोगवियोगादृष्टवेगानां



गुणतां, शाब्दस्यानुमानतां, तर्कस्यामानतां, जलतेजोवायूना गन्धगन्धरसगन्धरसस्पर्शहीनतां, हेतोस्त्रिलक्षणतां च वदन् वैशेषिक इव छलजातिनिग्रहस्थानानां तात्त्विकीं तत्त्वता, शक्यान्तर्भावानां प्रमाणादीना पदार्थता, वितण्डाहेत्वाभासानां कर्त्तव्यतां च निरूपयन् नैयायिक इव सर्वज्ञत्वादिविशिष्टदेवताऽभाव, वेदस्य नित्यता, पशुविशसनमययज्ञजन्यां स्वर्गितां च जल्पन् जैमिनीय इव प्रत्यक्षप्रमाणप्रमितस्य जगतो मिथ्यात्वं, प्रत्येकत्वाभावं जीवस्य बद्धाबद्धतां, च बुद्धे स्वपरावबोधराहित्यं च वर्णयन् वेदान्तीव च परस्परविरुद्धार्थदेशनेन तुरङ्गश्रृङ्गोपपादननिपुणतां कलयति। कथं नैवमित्याह - 'सार्वं' सर्वेभ्यो द्रव्यगुणपर्यायेभ्यो यथावस्थितस्थितिस्थापनस्थेम्ना तत्स्वरूपानपह्नुते. हित, सर्वेपा वा प्राणिनां पारमार्थिकसुखमयमोक्षसाधनसम्यक्श्रद्धानादिदेशकत्वेन दयाप्ररूपणदत्ताभयदानेन वा हितं सार्वं। एतादृशस्य वाङ्मयस्य महिमानमाचक्षाण शुद्धतामाह-'शास्त्र' मिति। शासनं हितस्य प्राप्तये योगयोग्यवर्त्मव्यक्ति, त्राणं चाऽहितनिवृत्तिलक्षणसंवरसमाख्यानात् योगक्षेमकृदितियावत् निरुक्त्या शास्त्रमिति। यद्वा-शिष्यते मिथ्यात्वमोहग्रहग्रस्तोऽज्ञानपट्टलुप्तलोचनः। प्रमादप्रकरप्रहीणात्मरमणतागुणश्च शिष्योऽनेन हितवचनेनेति शास्त्रं। विशेषणद्वारैतत्प्राशस्त्य प्रशासदाह-'कापथघट्टन' सदसदाद्यविशेषवर्णनविज्ञाविहितैकान्तकान्तोऽकान्त एव कापथ.। अनुभूयमानमपि स्वद्रव्यक्षेत्रकालभावैः सत्त्वमसत्त्व चेतरैरपलपन्तः कथ न तत्प्रणीत कापथ ?। अयथार्थादेशस्य तथात्वादेव। तस्य घट्टन-विनाशनं हेतुयुक्तिवृन्दवर्णितयथार्थस्वरूपतया। नहि नभसि भास्वति भासमाने भातु भवत्यल तमालततिश्यामला तमस्ततिः। न चैवं वक्तू रागद्वेपप्रसङ्ग। नवा कण्टकसर्पकीटवर्जे समे पथि प्रस्थित. विषमे वा कण्टकादीन् परिहरन् पान्थ पटुपरिकराणां पटूनां आपनीपद्यते परुपवचनपन्थितां। अहिंसासुनृतादि-

देशकं अनुभूयमानयाथार्थ्यस्वरूपाभिधायि च वाक्यं 'न मांसभक्षणे दोष इत्यादेः 'क्षणिका सर्वसंस्कारा' इत्यादेश्च असद्भूतप्ररूपण-प्रवणस्य स्वरूपमाविर्भाव्य न्यक्कार कुर्यादेवेति ।

अथैवं नितरां निजानुभवरूप प्रत्यक्षानुमानादि प्रमाणं निरूप्य परार्थप्रधानः परार्थं तदाह लक्षयन्—

स्वनिश्चयवदन्येषां, निश्चयोत्पादनं बुधैः ।
परार्थं मानमाख्यातं, वाक्यं तदुपचारतः ॥१०॥

स्व -प्रमाता प्रत्यक्षादिभिरविसंवादिभिरर्थनिश्चायकः, स्वान्य-निर्भासमयत्वात्तस्य । ज्ञानादनन्यो हि स । तस्य निश्चयः-निर्णय, ईहापोहादिना निर्भासितोऽपायाववधारणरूप प्रतिबोध, तत्तुल्य. । 'अन्येषां प्रमात्रतिरिक्तेषु, षष्ठीसप्तम्योरर्थं प्रत्यभेदात् । यद्वा शेषे षष्ठीयम् । तेनाऽन्यसम्बन्धि इत्यवधेयम् । निश्चयस्यानारोपितावबोध-रूपस्य उत्पादनं-प्रादुर्भावनं यत्तदिति शेष । 'बुधैः' बोधन्ति-प्रमाण-स्वरूपसङ्ख्याविषयफलान्यवगच्छन्ति याथातथ्येनेति बुधा ते, वक्त्रधीनं हि वाचां प्रामाण्यमित्येव कर्तुल्लेखः । 'परार्थं' अवयवे समुदायोपचारात् मध्यमपदलोपाद्वा पर.-परप्रतिबोधोऽर्थो यस्य तत् । यद्वा परस्मै इति परार्थं, स्वयं निर्धारितत्वात परेषा बोधायैवायं यत्न. । न च स्वयमबुद्धमर्थं बोधयत्यन्यं कश्चिद्विपश्चिदपि । मानं-प्रमाणं, आख्यात-प्रवीणपरिषदि प्रामाण्यतया प्ररूपितम् । ननु निर्णीत-ज्ञानतारूपस्य मानस्यात्मनिष्ठत्वात्तदुत्पादने न परे प्रभविष्णवोऽन्यथा-ऽनारतानन्तावबोधात्मनः केवलस्याप्युत्पत्तौ प्रयतेरन् परे कारुणिका इति नेयं वाचोयुक्तियुक्तियुक्ता । सत्य, प्रयत्न आत्मस्थ एवावबुद्धये प्रत्यलस्तथापि त तज्जन्यक्षयोपशम च विदधत्येवान्ये, सार्वदिक-सार्वत्रिकसद्बोधोद्भवेऽपि तज्जनकप्रयत्नस्य कारणतयाऽन्यौजस.

स्वीकृतत्वात् । उपदेशावबोधसंस्कारकारित्वादेव हि देवगुरुधर्म-निमित्तानामाश्रयणात् तथापि प्रयत्नः स न मानमिति चेदस्तु कारणे कार्योपचारात्तस्य मानतेत्येतदाह-'वाक्य'मित्यादि । उच्यते इति वाक्यं-आख्यातान्तं, उपलक्षणमेतत् संज्ञादीना । 'तत्' मान, उपचारतः-आरोपेन । नहि परार्थमानत्वं वाक्यस्य, किन्तु तस्य कारणमिति तदपि परार्थं मानम् । उपलभ्यते हि उपलब्धिमद्भिः कारणस्यापि कार्यत्वव्यपदेश उपचाराद्यथा घृतमायुर्नड्वलोदक च पाद-रोगः । प्रत्यक्षपरार्थप्रतिपादकवाक्यस्य परार्थमानत्वाभावे सर्वस्यापि वाक्यस्यागमत्वेन प्रतिपन्नप्रतिपादितपरिदृश्यमानार्थबोधस्याकारण-कत्वम् । न चान्यथासिद्धत्वं तस्य, तद्बोधेनैव तस्यान्वयव्यतिरेक-प्रतिपत्ते । परस्य तद्बोधे चावश्यक्लृप्तत्वाभावाच्चेति वाच्यम् । परस्य तथा बोधे तस्यावश्यक्लृप्तत्वात् । बोधस्य तु द्वारतैव, वाक्यजन्यत्वे सति परार्थमानजनकत्वात् । एव चोपलभ्य कश्चित्कञ्चिदर्थमध्यक्षा-दिना परप्रबोधाय वितन्वन् वाक्यव्रजं परस्य तद्बोधं जनयतीति सुष्ठूक्तं 'वाक्यं' समारोपादेव परार्थं मानम् ।

अथ परार्थप्रमाणस्य भेदौ मानकारणतां चाह—

प्रत्यक्षेणानुमानेन, प्रसिद्धार्थप्रकाशनात् ।
परस्य तदुपायत्वात्, परार्थत्वं द्वयोरपि ॥११॥

प्रत्यक्षेण-पूर्वोक्तरूपेण, प्रसिद्धः-प्रकर्षेण स्पष्टतालक्षणेन सिद्धोऽभिनिष्पन्नो निःसंदेहावबोधविषयतां प्रापितो योऽर्थ. जिनप्रतिमादिः, तस्य प्रकाशनं-परस्मै निरूपणं, तथैव अनुमानेन-प्राङ्निरूपितयथार्थ-स्वरूपेण च । चो गम्यो, द्योतकत्वात्तस्य । प्रसिद्धो-निर्दूषणहेतुतर्का-दिना निर्णीतो योऽर्थ आत्मादिः, तस्य प्रकाशनात् परार्थत्व-परव्यु-त्पादननिमित्तकत्वं द्वयोरपि-प्रत्यक्षानुमानयोरपि । अपिना न केवलं

प्रत्यक्षस्य नाप्यनुमानस्य केवला परार्थता । ऊरीक्रियते हि परैः केवलस्यानुमानस्य तथाविधता नत्वध्यक्षस्य । ननु दृश्यते हि प्रतिज्ञादिप्रयोगोऽनुमाने परार्थं, न तथा समक्षे किञ्चिदिति । न, तत्रापि तथा विधे अङ्गुल्यादिना निर्दिश्यमानतोपलम्भाद् यथावगतेपि साध्ये परव्युत्पत्तये प्रतिज्ञादेः प्रयुज्यमानस्य परार्थता, तथैवाध्यक्षेण निश्चितेप्यर्थेऽङ्गुल्यादि निर्दिश्य प्रतिपादयितुरध्यक्षावसितमर्थं कथमिव न परार्थता ?। तर्हि केवलादिप्रत्यक्षेण प्रतिपद्यार्थान् व्याकुर्वन् केवल्यादिवचनानि श्रुतरूपाणि कथं स्युस्तेषां परार्थप्रत्यक्षतापत्तेः । यो येनोपलभ्य प्रकाशते तस्य तथा परार्थतानियमापातात् । सत्यं, नेयं विभीषिकाऽत्र । यत आह–'परस्य' व्युत्पाद्यस्य तदुपायत्वात्-प्रत्यक्षानुमानाऽन्यतरावगमजननकारणत्वात्। न च केवल्यादिवचांसि अतीन्द्रियज्ञानायेति न तेषां परार्थप्रत्यक्षता, आगमतैव किन्तु । एवं च सांव्यवहारिकप्रत्यक्षेऽनुमितौ च परार्थता, नातीन्द्रियेऽध्यक्षे । स्मरणादेस्तु प्रत्यक्षोद्भवत्वेन तेनैव गतार्थता, मास्तु वा तस्य सा, स्वानुभवसापेक्षत्वादेव तस्य ।

परार्थप्रत्यक्षमेव निरूपयति साक्षात्—

प्रत्यक्षप्रतिपन्नार्थ-प्रतिपादि च यद्वचः ।
प्रत्यक्षप्रतिभासस्य निमित्तत्वात्तदुच्यते ॥१२॥

प्रत्यक्षं इन्द्रियानिन्द्रियोद्भवं साक्षात्ज्ञानं, तेन प्रतिपन्नोऽवेतोऽर्थो रूपरसादिस्तस्य प्रतिपादि-निरूपकं यत्-पश्य पुरतः स्फुरन्मणिरत्नाभरणभासिनी श्रीजिनप्रतिमा, आस्वादयाम्लोऽयं रस इत्यादिरूपं वचः-वाक्यं, प्रत्यक्षप्रतिभासस्य परात्मनः साक्षादवबुद्धेः निमित्तत्वाद्धेतुत्वात्तत्परार्थं प्रत्यक्षमित्युच्यते-प्रतिपाद्यते बुधैः । नह्यन्तरेण वाक्यं प्रतिपाद्यते परः । आगमस्य च न प्रत्यक्षहेतुता, शब्दार्थप्रतीति-

जनकत्वादेव तस्य प्रतीतौ हृषीकव्यापारस्य प्रतिपादितपदार्थस्य चोपलम्भात् हेत्वादिनिरूपणेनाऽग्न्यादिसाध्यज्ञानभावात् परार्थानुमानवद् दृश्यमानार्थनिरूपकवाक्यस्य परार्थप्रत्यक्षताऽक्षतैव। सम्बोधनपूर्वकं दृश्यमानार्थदर्शनोक्तं वाक्यं तथेति।

अथानुमानस्य परार्थतां प्रतिपिपादयिषुर्हेतुमूलतां तस्य समाकलय्याह-

**साध्याविनाभुवो हेतोर्वचो यत्प्रतिपादकम्।**
**परार्थमनुमानं तत्, पक्षादिवचनात्मकम् ॥१३॥**

हेतोः प्रतिपादकं वाक्यं परार्थमनुमानमिति सम्बन्धः। साध्यं-अप्रतीतमनिराकृतमभीप्सितं, तेनाविनाभूः - कारणकार्यादिभावेन प्रतिबद्धो, हेतुः-हिनोति-गमयति अप्रतीतं साध्यमिति व्युत्पत्तेः। तादृशस्य हेतोः प्रतिपादकं-निरूपणप्रवणं यत् धूमोऽत्र तेन वह्निमानयमित्यादिरूपं वाक्यं, तत् वाक्यमेव निरुक्तनिरुक्तं 'परार्थं' परस्यैव साध्यार्थज्ञानजनकत्वादनुमानं-लिङ्गज्ञानसम्बन्धस्मरणादनु जायमानं मानं-प्रमाणं परार्थानुमानमिति तत्त्वम्। कीदृशं तदित्याह-'पक्षादिवचनात्मकं' पक्ष्यते-व्यक्तीक्रियतेऽर्थो यस्मिन्निति पक्षः-सन्दिग्ध-साध्यवान्, आदिशब्दात् हेतुदृष्टान्तादिग्रहः। तस्य वचनं-निवेदनं तदेवात्मा स्वरूपं यस्य तत् पक्षादिवचनात्मकम्। परं प्रतिपादयता ह्यवश्यंतया पक्षहेतुयुगलं निगाद्य वागाद्यतत्त्वतन्त्रिणा। न च हेतुमात्रेणेप्सितार्थसिद्धिः, सद्धेतोरपि तादृशपक्षबलेन दुष्टत्वभावात्। सत्यामपि व्याप्तौ वह्निधूमयोर्ह्रदे दुष्टत्वस्याविवादसिद्धत्वात्। धूमदृष्टान्तस्तु प्रतिपाद्यप्रेक्षामपेक्षतेऽवबोधे, तदन्तरा न तदावश्यकम्, इतरथान्यथा, स्फुटयिष्यति चाग्रेऽग्राम्यथार्थाभिधानो दिवाकरः श्रुताकरः कविरेतत्, तस्य कथञ्चिन्निरर्थकत्वाख्यानेन। अन्ये तु साध्याभ्युपगतिः पक्षः, साध्यनिर्देशमृते हेतोर्व्याप्तौ सन्देहात्। वह्न्य-

पेक्षयालोकस्य सद्धेतुत्वेपि धूमापेक्षयाऽसद्धेतुत्वात्। साध्यवह्निर्णय-स्तु हेतुदर्शननिर्णयजनितः तथा साध्यहेतुयुग्मोद्गिरणमेव परार्थे सार्थकम्।

उक्तं पक्षादिवचनात्मकं परार्थानुमानं, परं कः पक्षः ? इति सम्भावयन् प्रश्नं पक्षं तत्प्रयोगस्यावश्यककर्त्तव्यतां चाऽऽह—

साध्याभ्युपगमः पक्षः, प्रत्यक्षाद्यनिराकृतः।
तत्प्रयोगोऽत्र कर्त्तव्यो, हेतोर्गोचरदीपकः ॥१४॥

साध्यं—व्यक्तीकृताकार, अभ्युपगमः—अभ्युपगम्यतेऽस्मिन्निति अभ्युपगमः, साध्यस्याभ्युपगमः साध्याभ्युपगमः, साध्याधिकरणमिति यावत्। यद्वा-साध्यस्याभ्युपगमो यस्मिन् स साध्याभ्युपगमः। व्यधिकरणबहुव्रीहेरपि स्वीकृतत्वात्। द्वितीयपक्षे तु साध्यस्याभ्युपगमो-निर्देशः पक्ष इति। स च प्रत्यक्षादिनाऽनिराकृतोऽविरुद्धः,आदिशब्दा-ल्लिङ्गलोकस्ववचनपरिग्रहः। प्रकटयिष्यति च प्रकरणकारोऽग्रे एतद्दूषणजालं निरूपयन्। अत्राहुः केचिद्धेतो स्वरूपमाविष्कुर्वता प्रादुष्कृतमेव साध्यमिति न तत्प्रयोगेनाऽर्थ इति। तन्नेत्याह-'तत्प्रयोगो' तस्य निर्दिष्टस्वरूपस्य पक्षस्य प्रतिपादनम्। अत्र परार्थानुमाने कर्त्तव्यः—कर्त्तव्यमेव। 'सर्वं वाक्यं सावधारणमिति न्यायादनुक्तोपि प्रतीयते इति प्रामाणिकपङ्क्तवचनाच्चात्रैवकाराध्याहार आवश्यकः। अथ पक्षप्रयोगे फलमाह-हेतोर्यथोक्तलक्षणस्य, गोचर-दीपकः- विषयप्रकाशकः, व्याप्तिप्रदर्शक इतियावत्। सत्येव वह्नि-लक्षणसाध्यनिर्देशे भवति श्रोतुर्ज्ञानं—'धूमो वह्निव्याप्तः' धूमसद्भाव-श्चात्र वह्निसद्भावाविनाभूत इति। साध्यनिर्देशाभावे चैकस्मादपि हेतोरनेकसाध्यसिद्धेः किमत्र प्रयोक्त्राभिप्रेतं साध्यमिति न निश्चिनुयात्। निश्चयनिहितनिबिडप्रयत्नोपि निश्चेता। तदवश्यतया साध्या-

भ्युपगम. पक्षापरपर्यायः प्रयोक्तव्य. । ये तु न पक्षप्रयोगमभिमन्यते शाक्यादयस्ताँश्छिक्षयन्नाह साध्यासिद्धिं —

अन्यथा वाद्यभिप्रेतहेतोर्गोचरमोहितः ।
प्रत्यर्थस्य भवेद्धेतुर्विरुद्धारेकितो यथा ॥१५॥

अन्यथा साध्याभ्युपगमाभावे, वादिन. स्वपक्षस्थापन-परपक्ष-प्रत्याचक्षणचणस्याभिप्रेतः—स्वाभिप्रेतसाध्यसाधनप्रत्यलत्वात्सम्मतः, हेतु-साध्याविनाभावित्वेन साध्यगमक प्रत्यक्षादिगम्य., तस्य गोचरो-विषय साध्यादिस्तत्र मोहित.—साध्यनिर्देशाभावेन साध्य-ज्ञानाभाववान् प्रतिवादी परपक्षोत्थापनस्थिरास्थ, प्रत्यर्थस्यासाध्यस्य हेतुर्गमको भवेत् । यथोपप्रदर्शने । विरुद्धारेकितो-साध्याभावसाधक-त्वसंदिग्धतावान् हेतुः । भावार्थः—स्थापयता पक्षं वादिना विना पक्ष-प्रयोगं साध्याभ्युपगमापराभिध यो हेतुरुक्तः केवल स सन्दिग्ध-विरुद्धव्यावृत्तिकत्वदसाध्यस्य साध्येतरस्यापि वा साधक. समापद्येते-त्यवश्यं वक्तव्य पक्षप्रयोग । भवत्येव वृद्धानु सिषाधयिषयापि व्याकृतो धूमाख्यो हेतुः साध्यनिर्देशमृते वह्नेर्गमकोपि वह्न्यभावं जलादिकं वापेक्ष्य विरुद्ध इति । न चान्तरा पक्षप्रयोगं व्याप्तिप्रदर्शनं स्यात्ततश्च परार्थानुमानप्रथा दूरापास्तप्रसरैव साध्यमनभ्युपगच्छत । नह्येको हेतुर्व्याप्तः साध्येनैकेनैव, आलोकेन वह्निशैत्याभावाद्यनेक-साध्यप्रतिपत्ते । मृगशीर्षोदयेन पूर्वचरोत्तरचराद्यनेकप्रतिपत्तेश्चेति । न प्रतीयात् सभ्य सभाभूषणोपि वादिवाञ्छित साध्यं निश्चितमन्तरेण साध्यनिर्देशं प्रत्यवतिष्ठते च प्रत्यर्थी प्रत्यर्थापेक्षया विरुद्धतादिक-मुद्भावयन्निति स्यात्सर्वं सुस्थं सिषाधयिषितसाध्यमुल्लिखतो विबुध-लेखस्याख्यातम् ।

एतदेव दृष्टान्तेन दृढयितुमाह—

धानुष्कगुणसंप्रेक्षि-जनस्य परिविध्यतः ।
धानुष्कस्य विना लक्ष्यनिर्देशेन गुणेतरौ ॥१६॥

धनुषा चरन्तीति धानुष्क', तस्य गुणो-यथालक्ष्यवेधकत्वादि, तं सम्यग्-यथार्थतया, प्रेक्षणशीलो-निरूपणप्रवणो, यो जन तस्य । 'गुणेतरौ' यथा लक्ष्यं विद्धमिति गुणोऽन्यथा त्वन्यथेत्युभयमपि धानुष्कस्य अवभासते, मनसि इति शेष । कुत एवमित्याह-लक्ष्य-निर्देशेन--कनीनिकादिवेधनीयकथनेन विना परिविध्यतो- लक्ष्यं वेधयन्नपि न स्वस्य गुणमेवाविर्भावयति, किंतु गुणदोषोभयमेवेत्युक्त-मेव प्राक् । यद्वा-प्रेक्षकजनस्याग्रतो लक्ष्यनिर्देशेन विना परिविध्यतो धानुष्कस्य गुणेतरौ स्यातां, निर्देशे तु गुण एव । एवं च प्रकृतेऽपि पक्षप्रयोगे तदभावे चोक्तवद्भावना कार्या दृष्टान्तमनुरुध्य गुणेतर-योरिति कार्य एवाभ्युपगम साध्यस्य ।

उपवर्ण्य पक्षप्रयोगस्यावश्यकता परार्थानुमानेऽवश्यं कर्त्तव्यता हेतुप्रयोगस्यापीति तद्भेदावाह—

हेतोस्तथोपपत्त्या स्यात्, प्रयोगो वान्यथापि वा ।
द्विविधोऽन्यतरेणापि, साध्यसिद्धिर्भवेदिति ॥१७॥

हेतोः-पूर्वमुपदर्शितलक्षणस्य 'तथोपपत्त्या' सत्येव साध्ये उपल-ब्ध्या, वाशब्द पूर्वचरोत्तरचर-सहचर-स्वभाव-कार्य-कारणादिभेद-प्रतिपत्त्यर्थं, स्यात प्रयोगः-परव्युत्पादनाय प्रतिपादनम । अन्यथापि-साध्याभावेऽनुपलब्ध्यापत्तेरित्येवं व्यतिरेकमुखेन । अपिशब्दो द्वयोरपि तुल्यकक्षतापरिग्रहाय । यथैवाऽन्वयमुखेन साध्यं सिद्धिपदवीं प्रेजति तथैवं व्यतिरेकमुखेनापि हेतुप्रयोगेन । वाशब्दोऽत्रापि पूर्ववद् भेदो-पग्रहाय । तत्त्वतो द्विधैव तत्प्रयोगोऽवान्तरभेदास्तु प्रत्येकमुपलब्धे-

रनुपलब्धेश्चे त्येवाह-'द्विविध' इति । द्वे एव-तथोपपत्त्यन्यथानुपपत्त्याख्ये एव, विधे-प्रकारौ, अन्येषां तयोरेवान्तर्भावात् यस्य स द्विविध । ननु किं सर्वत्रापि द्विविध एव प्रयोगो हेतोरुतान्यथापि क्वचिदित्याह-'अन्यतरेणापि' तथोपपत्त्याख्येनान्यथानुपपत्त्याख्येन वा प्रयोगेन 'साध्यसिद्धिः' साध्यस्य 'प्रसाधितस्वरूपस्य सिद्धिर्न्युत्पादनं भवेत् ।' अवधारणफलत्वाद्वाक्यस्य स्यादेव । नोभयथा हेतुप्रयोगापेक्षा, सत्यां साध्यसिद्धावन्यहेतुप्रयोगे निग्रहस्थानार्हत्वापत्ते । इतिशब्दो व्युत्पन्नापेक्षया परार्थानुमाने पक्षहेत्वोरेव प्रयोग आवश्यकस्तावन्मात्रेणैवेप्सितसिद्धेः । दृष्टान्तादेस्तु स्वमनीषिकयैवोल्लिख्यमानत्वात् । इतरस्य तु स्यादेव व्युत्पत्तौ दृष्टान्तापेक्षा । न चैतावताऽऽवश्यकता दृष्टान्तस्य सर्वेषु परार्थानुमानेषु । यतो वक्ष्यत्यन्तर्व्याप्त्यैवेत्यादिना दृष्टान्तदर्शनस्य साध्यसिद्धेरनङ्गता ।

अथ परमकारुणिको भगवान् दिवाकरो मेघवत् सर्वानुकम्पापरतया बालबोधाय दृष्टान्तप्रयोगस्यावश्यकत्वात्तस्य च साधर्म्येतर-भेदभिन्नत्वात् साधर्म्यदृष्टान्तं तावत् सुबोधत्वाद्व्याप्तिनिबन्धनतया च मुख्यमवधारयन्नाह—

साध्यसाधनयोर्व्याप्ति-र्यत्र निश्चीयतेतराम् ।
साधर्म्येण स दृष्टान्तः, सम्बन्धस्मरणान्मतः ॥१८॥

साध्यं-निर्णीतस्वरूपं वह्न्यादि, साधनमपि प्रागुक्तलक्षणं धूमादि । साध्यते साध्यमनेनेति व्युत्पत्ते । तयोर्व्याप्तिरविनाभावस्तर्केणोहापराभिधानेन, सत्येव वह्न्यादौ धूमाद्युपलम्भोऽसति चानुपलम्भ इति सहचारित्वोपलम्भेपि धूमस्य वह्निमन्यतां यथावन्निर्णीयाविनाभावो वह्निना धूमस्येति यो निर्णयः सपनीपद्यते, स एव च व्याप्तिरित्यभिधीयते । सा यत्र महानसादौ निश्चीयतेतराम् असिद्धा-

दिदूषणकर्दमकलङ्कितया ऽभ्रान्तज्ञानेनाबाध ज्ञायते । प्रथम तावद्व्याप्ति प्रतिपित्सुर्महानसादौ वह्निधूमयोरभावमुपलभते । पश्चात्-क्रमाद्वह्नि धूमं वह्न्यभाव धूमाभावं चोपलभ्य निर्णयति, यदुत यत्र यत्र धूमोपलम्भस्तत्र तत्र धूमस्य वह्निजन्यत्वादवश्यतया वह्न्युपलम्भ इति स व्याप्तिप्रतिपत्त्याधारः साधर्म्येण—साध्यसाधनोभयवत्त्वलक्षण-धर्मवत्त्वेन दृष्टान्त मतो विद्वद्भि । कुत ? इत्याह-सम्बन्धस्मरणात्-साधनदर्शनेन साधनसाध्यवन्महानसादेः स्मरणम् । ततश्च तयोरविना-भावलक्षण सम्बन्धो व्याप्त्यपराह्व स्मृतिपथमायातीति साधर्म्य-ताऽस्य । ततश्चास्यापि महानसादिवद्धूमादिलक्षणसाधनवत्त्वेन वह्न्यादिलक्षणसाध्यवत्ताऽवश्यम्, इति निर्णयोऽनुमानम् ।

आविर्भाव्य साधर्म्यदृष्टान्तस्य स्वरूपमाह वैधर्म्यदृष्टान्तस्य तत्-

**साध्ये निवर्त्तमाने तु, साधनस्याप्यसम्भवः ।**
**स्थाप्यते यत्र दृष्टान्ते, वैधर्म्येणेति स स्मृतः ॥१९॥**

साध्ये—वह्न्यादिलक्षणे निवर्त्तमाने दृष्टान्तीक्रियमाण आधारेऽ-वर्त्तमाने, तुशब्द साधर्म्यदृष्टान्तापेक्षया विरुद्धतासूचनया विशेषणार्थ. । तत्र हि यत्र साधनं तत्र साध्यमित्येव व्याप्तिग्रहो अत्र त्वन्यथैव । साधनस्य धूमादिलक्षणहेतोः, अपि साधनस्य यावत्साध्याधिकरण-वृत्तिताज्ञापनाय । असम्भवोऽवद्यमानता यत्र ह्रदादिलक्षणे दृष्टान्ते-व्यतिरेकव्याप्तिग्रहणाधारे स्थाप्यते-ऊहापोहादिना निर्णीयते, स पूर्वोक्तो वह्निधूमव्याप्त्यपेक्षया ह्रदादिलक्षण च, वैधर्म्येण साध्याभावेन साधनाभावो नियमित इति वैधर्म्यता प्रकृतानुमाने । स्मृत. पूर्वपुरुषै-र्न्यायनिष्कर्षनिरर्गलप्रतिभै । इतिना दृष्टान्तस्वरूपाख्यानसमाप्तेः सूचाकृता ।

दृष्टान्तद्वैविध्य प्रदर्श्य मन्दमतिव्युत्पत्तये, नहि दृष्टान्तमात्रेण

साध्यसिद्धिः, पार्थिवस्य लोहलेख्यत्वदर्शनेन लोहलेख्यत्वस्य वज्रेऽप्यापत्तेः। किन्तु साध्यसाधनयोरविनाभावनिर्णयेन कथञ्चिदपि स्यादिति तस्य सद्भावेऽसद्भावेपि व्यर्थतेत्याहोदाहरणस्य —

अन्तर्व्याप्त्यैव साध्यस्य, सिद्धेर्बहिरुदाहृतिः।
व्यर्थैव तदसद्भावेऽप्येवं न्यायविदो विदुः ॥२०॥

अन्तर्व्याप्त्या- कार्यकारणाद्यन्यतमभावेन साधनस्य साध्याविनाभूत्वनिर्णयलक्षणया तात्त्विकव्याप्त्या, एवकारो दृष्टान्तोपनयादिव्यवच्छेदपरः, उक्तलक्षणव्याप्तिमात्रेणेत्यर्थः। साध्यस्य-प्रपञ्चितप्राक्स्वरूपस्य वह्न्यादिलक्षणस्य, सिद्धेः-निर्णयात्। भवत्येव च धूमस्य वह्निना सहाविनाभावनिर्णये धूमोपलम्भमात्रेणैव वह्निलक्षणसाध्यसिद्धिर्व्युत्पन्नस्येति। बहिरुदाहृतिर्महानसादिलक्षणसाध्यसाधनसाहचर्यादिमात्रप्रदर्शकोदाहरणं व्यर्था, विनाभूतस्यापि श्यामत्वादिना मैत्रातनयत्वादेर्दर्शनात् बहिरुदाहरणस्य व्यर्थता। एवकारः साध्यसिध्यङ्गताव्यवच्छेदाय। अन्तर्व्याप्त्यैव साध्यस्य सिद्धत्वात्। न चानुपसंहारित्वं, तस्य दूषणत्वेनानभ्युपगमात्। अन्यथा सर्वं कस्यापि ज्ञेयं वाच्यत्वात् इत्याद्यनुमानभणितिर्व्यवच्छिद्येत। न च पक्षैकदेश एवोदाहरणतया स्वीक्रियत एवैतादृश उदाहरणे दृष्टसयाङ्गीकारेनुमानस्यासत्यमपि साधयेत् न कः। अन्तर्व्याप्तिसद्भावे तन्मात्रेण साध्यव्युत्पत्तेर्दृष्टान्तस्य वैयर्थ्यं व्यावर्ण्येतरथापि तस्य तथात्वमाह-'तदसद्भावे' साध्यसिद्धेरभवनेऽन्तर्व्याप्त्येत्यत्रापि ज्ञेयम्। अपिरुभयथापि बहिरुदाहृतेर्वैयर्थ्यप्रदर्शनपरः। सिद्धेऽसिद्धे वा साध्येऽकिञ्चित्करत्वात्तस्याः। न चैतत्स्वमनीषिकाविजृम्भितम्, येन शिष्टत्वातिक्रान्तिः स्यादित्याह एवं-पूर्वोक्तप्रकारेण बहिरुदाहृतेर्व्यर्थतां न्यायविदोऽनुमानतत्त्वरूपविषयकारणज्ञानविचारवन्तो विदुः - ख्यातवन्तः। युक्तिस्तु दर्शितैव प्राक्।

तदेवं परार्थानुमानं निरूप्याथ तद्दोषान्निरूपयन्नादौ तावत्पक्षाभासं प्रदर्शयति—

**प्रतिपाद्यस्य यः सिद्धः, पक्षाभासोऽक्षलिङ्गतः।**
**लोकस्ववचनाभ्यां तु, बाधितोऽनेकधा मतः ॥२१॥**

प्रतिपाद्यस्य-प्रतिपादयितुं प्रक्रान्तस्य साध्याभ्युपगमस्य, यः वक्ष्यमाणदोषाणामन्यतमेन केनापि दुष्टोऽक्षबाधादिना सिद्धोऽनाहार्यनिश्चितबोधेन निर्णीत, पक्षाभासः। सोऽनेकधाऽक्षाद्यनेकबाधकसंभवेन मत. पूर्वप्रचीर्णैः। तदेवाह—'अक्षलिङ्गत' हृषीकाण्यक्षाणि। यद्वा-मन. श्रोतासि च। लिङ्गं च साध्यान्वयव्यतिरेकानुविधायि ताभ्यां, तृतीयाद्विवचने तससंभवाद्विभक्तिकत्वात्तस। बाधितो—विरुद्धतयाधिगत. पक्षाभासो ज्ञेय'। तद्यथा-आह कश्चित् अनुष्णोऽग्निर्द्रव्यत्वात् जलवत्। अत्र हि द्रव्यत्वेन साध्यमानमग्नावनुष्णत्वं प्रत्यक्षबाधितम्। न च वह्निमन्तरेणान्यदस्ति उष्णतावद्द्रव्यं, येन हेतोरनेकान्तिकतापत्तिं कर्त्तुं पार्यते। न चाध्यक्षविरोधेऽन्य बाधोऽप्यवेक्ष्यतेऽपीति। चाक्षुषप्रत्यक्षबाधित साध्याभ्युपगम इत्यक्षबाधितत्वम्। एवं शेषेन्द्रियमनोभिरपि विरुद्धता—शब्दो न श्रावण, गन्धो न घ्राणविषयो, रसो न रसनाविषय, स्पर्शो न स्पर्शनविषयः, सुखादि न मनोविषयमित्यादिष्वनुमानेषु स्वधियोह्या। एवं कश्चिच्चेदाऽऽह—नात्मगुणो ज्ञान, न वा सर्वज्ञः सम्भवति, न च पर्वतो वह्निमान् इत्यादिलिङ्गबाधितानुमानतति अन्वयव्यतिरेक-तारतम्यवत्त्वधूमवत्त्वलक्षणैर्हेतुभिस्तद्विरुद्धार्थसिद्धिसम्भवात्। तथैव 'लोकस्ववचनाभ्यां' लोको-व्यवहार्यो जनो, न तु यः कोऽपि, तस्यार्थागम-तत्प्रामाण्याप्रामाण्यविचारविकलत्वात्। तेन बाधितस्तदभ्युपगमविरुद्धस्तद्विरुद्धाभ्युपगमे हि स्पष्टो व्यवहारोच्छेद। न चातिशयितो दोषोऽस्मात् पर'। यथाह कश्चित्-न प्रमाणप्रमेयव्यवहारो, न वा किञ्चिदचेतनं वस्तु, नित्य-

मनित्यंवा सर्वथा समस्तं वस्तुवृन्दमित्याद्यनुमानपरम्परा ज्ञेया। अत्र हि प्रवृत्त्यादि-भोजनादि-प्रत्यर्पणादिव्यवहारानुपपत्तिरिति लोक-विरुद्धता। अत्र यद्यप्यस्त्येव प्रत्यक्षानुमानादिविरुद्धता. परं लोक-विरोधस्य प्राबल्यज्ञापनाय पृथगुपन्यासोऽन्यथा तु सप्रमाणे लोका-भ्युपगमे प्रमाणबाधात्। इतरथा तु न किञ्चिदिति नार्थं कोप्यनेन सिद्ध्यतीति। स्ववचनेनेति। तत्र स्वस्य-प्रमाणप्रयोजकस्य वादि-प्रतिवाद्यन्यतरस्य, वचनं-लपनलपितम्, अङ्गीकृतं साध्यमिति यावत्। तेन बाधितः। तत्रापि सप्रमाणाभ्युपगमे पौरस्त्ये पाश्चात्यस्यान्यथा-वचनस्य स्पष्टैव विरुद्धता। पौरस्त्येऽप्रमाणाभ्युपगमे तु प्रतिपादकस्य बुद्धिशून्यता पश्चात्ततोऽन्यथा प्रतिपादने इति पार्थक्येनोपन्यासः। तत्त्वतस्तु स्ववचनप्रतिबद्धो न चलिष्यति, चलने वितण्डापातात् निग्रहस्थानार्हतापत्तेर्वा, तस्य निरुत्तरत्वापादनात्। अचलने तु पूर्वापरविरुद्धवादित्वेन निग्रहार्हत्वमिति पार्थक्यस्यार्थवत्तेति। यथाऽऽह कश्चन-प्रसिद्धं प्रमाणं न चैतत्प्रमेयावसायि प्रोवाचेति। अत्र च प्रमीयतेऽनेन प्रमीयमानतास्पदं वस्तु तत्प्रमाणमिति प्रमाण-शब्देनैवाङ्गीकृतं वादिना प्रमाणस्य प्रमेयपरिच्छेदकत्वमन्यथा च पश्चाल्लपितं तत्र च पूर्ववद्दोषापात आपद्यते। तुश्चार्थे। स च चतुर्णा-मपि बाधकानां समुच्चयाय पूर्वाभ्यां वानयो समुच्चयाय। अन्ये त्वाऽऽगमबाधितसूचनायेत्याहुः-यथा जैनैः कार्या पाशुपतादि-सेवेत्यादि। अत्रादेवे देवत्वबुद्ध्यादिना प्रत्यक्षेणैव मिथ्यात्वापातान्नि-षिद्धत्वाच्चास्यागमे तद्विरुद्धता स्पष्टेति। एवं प्रत्यक्षलिङ्गलोकस्व-वचनैर्बाधितः साध्याभ्युपगमः पक्षाभास इत्युच्यते। न च प्रत्यक्षा-दीनामेकविधत्वेयत्ता वेत्याह तद्बाधितानामनेकधात्वम्— 'अनेकधा' एकेन प्रकारेणेत्येकधा, न तथाऽनेकधा। प्रत्यक्षादीनामनेकधात्वात्तै-र्बाधितस्य साध्याभ्युपगमस्य पक्षाभासापरपर्यायस्याप्यनेकधात्वं न दुरुपपादम्। न चेदं स्वकल्पनाकल्पितमित्याह-'मत.' इति। मतोऽ-

भिमतोऽन्नादिबाधहेतुस्वरूपादिबोद्धभिर्निर्णीतज्ञानवद्भिः पूर्वाचार्यै। अन्यैश्च बाधित इति हेतुदूषणमुक्तम्। न च तद्युक्त, हेतो स्वरूपेण बाधाऽभावात्। व्याप्तिबाधने तु स्यादपि। न च सापि बाध्यतेऽत्र न वा तन्मुखेन दोषापादनमभिप्रेतं, किन्तु पक्षप्रयोगविरोधेनेति यथार्थताऽस्य पक्षाभासत्वादिनेति।

एवं चानुमानाङ्गस्य पक्षस्याभासं दर्शयित्वाऽधुना पक्षहेतुवचनात्मकत्वात् परार्थानुमानस्य तच्छेषभूतस्य हेतोराभासानाऽऽख्यन् प्रथम 'साध्याविनाभुवो लिङ्गा'दितिवाक्येन सूचितं लक्षण हेतोराह पूर्वार्द्धेनोत्तरार्द्धेन तदाभासांश्च—

अन्यथानुपपन्नत्वं, हेतोर्लक्षणमीरितम्।
तदप्रतीतिसन्देह-विपर्यासैस्तदाभता ॥२२॥

तत्रान्यथा-साध्याभावे, उपपन्नं युक्त्या घटमान, प्रामाण्याऽ—विरोधीत्यर्थ। नोपपन्नमनुपपन्नं-युक्त्याऽघटमानं तस्य भावोऽनुपपन्नत्वं अन्यथानुपपन्नत्वम्। व्यतिरेकव्याप्तिप्रदर्शनम् च लक्षणतया साहचर्यमात्रादीनां हेतुता नेति ज्ञापनायानुपपन्नत्वपर्यन्तानुधावन प्रोज्झ्य साध्याभावे साधनाभाव इति सामान्यं यत् कृतं नियम–दर्शनाय, एवमेव तथोपपत्तावप्यभ्यूह्यम्। अदर्शयिष्यदन्यथा तत्रापि साध्यसत्त्वे सत्त्वमिति। तदन्यथानुपपन्नत्वम् किमित्याह—'हेतोर्लक्षण'मिति। हिनोति-गमयति, परोक्षमपि वह्न्यादिकमप्रतीतमनि–राकृतमभीप्सितं चेति हेतुर्धूमादि प्रत्यक्षादिना गम्यमानः। 'हिंट् गतिवृद्ध्यो'रित्यस्मात् 'कृसिकम्यमिगमितनिमनिजन्यसिमसिसच्यवि भाधागाग्लाम्लाहनिहायाहिक्रुशिपुभ्यस्तुन्' इत्यौणादिके 'तुनि' हेतु शब्द-निष्पत्ति। तस्य लक्षणं–लक्ष्यते – इतरव्यावृत्त्या निश्चीयते प्रकृतमनेनेति लक्षणमसाधारण स्वरूप वह्नेरिवोष्णत्वादि। लक्षण

च हेतोरन्यथानुपपन्नत्वम्। परैस्तु त्रिरूपत्व पञ्चरूपत्वं शौद्धोदन्याक्षपादादिभिरभिमतं, तच्च न युक्तम्। त्रिरूपत्वं तावत् सपक्षसत्त्व-विपक्षासत्त्वपक्षधर्मरूपम्।

रूपाणि पक्षधर्मत्वं सपक्षे विद्यमानता। विपक्षे नास्तिता हेतोरेवं त्रीणि विभाव्यता ॥१॥ मिति वचनात्। पञ्चरूपत्वं चासिद्ध-विरुद्धा-ऽनैकान्तिक – सत्प्रतिपक्ष – बाधरहितलक्षणमुभयमपि स श्यामो मैत्रातनयत्वादितरतत्पुत्रवदित्यत्रासदनुमाने सत्त्वाद्दुष्टमेव। त्रिरूपताया तावत् इतरतत्पुत्ररूपे सपक्षे सत्त्वं, दाक्ष्यादितनये विपक्षेऽसत्त्वं, तस्मिंश्च पक्षीकृते सत्त्व च हेतोर्न केनाप्यन्यथाकर्त्तु पार्यते। पञ्चरूपतायामपि अनर्थकपक्षहेतुविशेषणलक्षणाश्रयस्वरूपासिद्धिपक्षवृत्तित्वाऽभावलक्षणपक्षाऽसिद्ध्यभावान्न तावदसिद्धि। न च सपक्ष-विपक्षवृत्तित्वाभावात् सपक्षवृत्तित्वाद्दृष्टान्तयुक्तत्वाच्चानेकान्तिकता, साध्याभावासाधकत्वान्नापि विरुद्धता, न चास्त्यत्र साध्याभाव-साधक हेत्वन्तरं येन सत्प्रतिपक्षता स्यात्, न च सम्भवति बाधगन्धोपीति सुष्ठूक्त-तत्रासदनुमाने सत्त्वादेतल्लक्षणस्य दुष्टत्वमिति। ननु नास्ति विपक्षे हेतु, पर नियमतो नेति नेति चेदायातमेवान्यथानुपपन्नत्वम्। तथा चैकमेव तदस्तु, किं तत्त्रयेणेति। शङ्केत च शङ्काकुलो यच्छ्यामत्वे साध्ये शाकपाकजत्व ह्युपाधि। साध्यव्यापकत्वे सति साधनाव्यापकत्व हि तस्य लक्षणम्। यथा पर्वतो धूमवान् वह्नेरित्यत्रार्द्रेन्धनसंयोग उपाधिर्विद्यते चार्द्रेन्धनसंयोगव्यापकता धूमे, न चास्ति वह्निलक्षणे साधने-अयोगोलकादौ साधनसत्त्वेऽपि तदभावादेवमत्रापि। ननु क्वाव्यापकता साधनेनेतरस्य तत्पुत्रस्यान्यरूपस्याभावादितिचेन्नाय नियमो-यच्छ्यामत्वं तत्पुत्रत्वेनेति तेनाव्यापकतेति चेदायातमेवान्यथानुपपन्नत्व, किं पञ्चरूपत्वेनेति तदुक्तम्।

'नान्यथानुपपन्नत्वं, यत्र तत्र त्रयेण किम्।

अन्यथानुपपन्नत्वं, यत्र तत्र त्रयेण किं ॥१॥ मिति । वैशेषिकाय च पञ्चरूपेण किं भवेदिति । अन्यच्च कथमुभावप्येतौ भविता शकटोदयः कृत्तिकोदयादित्यत्र पक्षधर्मतां समानयेतां । तत् सूक्तं-अन्यथानुपपन्नत्वमेव हेतोर्लक्षणम् । न चैतच्छिष्टाननुसारि, तथात्वे ह्यशिष्टत्वप्रसङ्गात् । 'शिष्टा' शिष्टत्वमायान्ति, शिष्टमार्गानुवर्त्तनादि'ति वचनादिति । शिष्टानुसारित्वज्ञापनायाह–'ईरितं' लक्षणंवेदिभि कथितम् । धातोरनेकार्थत्वाद् गतिकम्पनार्थस्यापीरे कथनार्थतोदुपसर्गपूर्वस्य तु भवत्येव कथनार्थतेत्येवं निरूप्य लक्षण हेतोस्तदाभासान्निरूपयिपुराह-तदप्रतीती' त्यादि । तस्य लक्षणतयाभिमतस्यान्यथानुपपन्नत्वाप्रतीतिरनिर्णय. तथाविधप्रमाणानुपलम्भात् । यथा सर्वज्ञत्ववक्तृत्वयोर्यथा वा शब्दत्वपरिणामित्वयोरित्यादि । एवं तस्यैवान्यथानुपपन्नत्वस्य सन्देहोऽनवस्थितानेककोटिकज्ञानम् । तेन नित्यत्वप्रमेयत्वयोरिव । तथैव विपर्यास साध्याभाव एवोपपन्नत्व, तेन वह्निमत्त्वजलवत्त्वयोरिव । समासश्चात्रैवं-अप्रतीतिश्च सन्देहश्च विपर्यासश्चाप्रतीतिसदेहविपर्यासास्तस्यान्यथानुपपन्नस्याप्रतीतिसंदेहविपर्यासास्तदप्रतीतिसन्देहविपर्यासास्तै । अत्र तच्छब्देन लक्षणपरामर्शः । किमित्याह-'तदाभते'ति । तच्छब्देनात्र 'हेतुलक्षणलक्ष्यपरामर्शस्तथा च तद्वद् हेतुवद्राभान्तीति तदाभा–हेतुतया ज्ञैरभिप्रेता अपि न हेतुकार्यसाधका इति । तेषां भावस्तदाभता, हेत्वाभासतेत्यर्थश्छन्दोनुरोधेनैवं व्यपदेशः प्रसिद्धतरशब्दोल्लङ्घनेन । न च तेनाशिष्टता, सत्प्रतिपक्षबाधयोः पक्षदूषकत्वेन नात्रोपन्यासः । न चेमौ व्याप्तिं प्रतिबध्नीत, किंतु पक्षप्रयोगमेव । तथा च कथङ्कारमनयो. स्याद्धेत्वाभासता । तद्युक्तियुक्तमुक्तं त्रिभिरप्रतीत्यादिर्हेत्वाभासत्वमिति ।

एवं समासतः समुदायेन हेत्वाभासत्वं निरूप्य तदभिधानानि पृथग् लक्षणानि च निरूपयन्नाह—

असिद्धस्त्वप्रतीतो यो, योऽन्यथैवोपपद्यते।
विरुद्धो योऽन्यथाऽप्यत्र, युक्तोऽनैकान्तिकः स तु।२३।

अत्रानुमानप्रस्तावे हेत्वाभासप्रकरणे यः कोऽपि अप्रतीत प्रत्यैषीति प्रतीतो, न तथा प्रतीतः केनापि प्रमाणेन न यस्यान्यथानुपपन्नत्व निर्णीतम्। यद्वा-प्रत्ययन प्रतीति., स्त्रिया क्तिविधानात्। सा विद्यतेऽस्य प्रतीतोऽभ्रादित्वादप्रत्यय। न तथाऽप्रतीत.। अर्थस्तु प्राग्वदेव। अत्र यत्तदोर्नित्याभिसम्बन्धात्स इत्यध्याहार्यम्। असिद्धोऽसिद्धतया यः शिष्टैरभिमतो हेत्वाभासभेदः सोऽयमेव। तोरवधारणार्थत्वात्। तत्फल तु न पक्षाऽसिद्धयादिकः, तस्य हेतुत्वेऽबाधात्। तथा यः कोऽपि अन्यथैव-साध्याभावे एव, अवधारणेन साध्यसहचारिणो व्यवच्छेदमाह। तस्यानेकान्तिकदोषदुष्टत्वात्। किमित्याह-उपपद्यते-प्रमाणेन घटमानो भवति। अत्रापि पूर्ववत्स इत्यध्याहार्यम्। स विरुद्धो विरुद्धाभिधानो हेत्वाभासः। तथैव यो हेतुरन्यथापि-साध्याभावेऽपि, अपिना साध्यवतीत्यस्यापि ग्रहणम्। अन्यथा विरुद्धत्वापातात्। तथा च साध्यवति तदभाववति च युक्त-प्रमाणेनोपपन्नो भवति-वर्त्तते इत्यर्थ.। स प्रकृतलक्षणयुक्त। तु-रवधारणे। स चेममेवावधारयति। तथा च स एव, न तु सकल-सपक्षविपक्षव्यावृत्तलक्षणासाधारणादृष्टान्तलक्षणानुपसंहारिलक्षणौ, तयोर्हेत्वाभासत्वाभावात्। अन्यथानुपपन्नत्वस्य निर्णयेऽनिर्णये च पूर्वेषामन्यतमेनावश्य दुष्टत्वात्, सामान्यं पक्षीकृत्य विशेषस्य दृष्टान्तत्वेनोपादानस्योभयमतसिद्धत्वाच्च। न च दृष्टान्तं व्युत्पन्नान् व्युत्पाद्यानङ्गीकृत्य प्रतिपत्तेरङ्गमपि व्याप्त्यग्रहणे तु स्पष्ट एवाऽसिद्ध इति हेत्वाभासस्तत्राङ्गतेति नार्थस्ताभ्यामिति समञ्जसमुक्तं-यत्साध्यतदभाववद्वृत्तिरेवानेकान्तिकः। अत्र 'अमद्रमहमे'त्यादिर्गत्यर्थको दण्डकधातुस्तस्मात् दम्यमितमी'त्यादिनौणादिके तेऽन्तो-धर्मः। एकोऽन्तो-धर्मो यस्य स एकान्तः-साध्यान्यथानुपपन्नो, न तथाऽनेकान्तः स

एवानेकान्तिकः स्वार्थिकेकणि । इतिशब्दनिष्पत्तिरुद्धा ॥ २३ ॥

एवमनुमानाङ्गे हेतौ दूषणान्यभिधाय साम्प्रत मन्दमतीन् व्युत्पादयितु प्रयुक्तयोर्दृष्टान्तयोर्द्वैविध्यं यत्साधर्म्य–वैधर्म्यभेदेनाम्नातं पूर्व, तत्र तावत साधर्म्यदृष्टान्तस्य अनायासबोध्यस्य दूषणानि, दृष्टान्ताऽऽभासो यैर्भवति तानाह—

साधर्म्येणाऽत्र दृष्टान्ते दोषा न्यायविदीरिताः ।
अपलक्षणहेतूत्थाः, साध्यादिविकलादयः ॥२४॥

तत्र समानो धर्मो यस्य स सधर्मा, 'द्विपदाद्धर्मादन्' [७।३।१४१] इत्यनि, सधर्मणो भाव· साधर्म्य-पक्षीकृत इव साध्यसाधनोभयवत्त्वं सपक्ष इति यावत, तेन। करणे 'यद्वे दैरिति वा तृतीया। अत्रानुमानोपयोगिदृष्टान्तदूपणनिरूपणे । यद्वाऽत्र–प्रतिपाद्यतया मनोधृते प्रत्यक्षे, क्वेत्याह–'दृष्टान्ते' । अन्तो-निश्चय साध्यान्यथानुपपन्नत्वलक्षण', स दृष्टो–निर्णीतो यस्मिन्निति दृष्टान्त –साधनस्य साध्येनान्वय–व्यतिरेकप्रतिपत्तिस्थानम् । अत्र साधर्म्येणाधिकार इति, अन्वयप्रतिपत्ते स्थान ग्राह्य', तस्यैव साधर्म्यदृष्टान्तत्वात्। 'दोषा 'दूपयन्ति प्रतिपिपादयिषितमर्थं हेतु' वेति दोपा-दृष्टान्ताभासत्वप्रयोजकाः । न चैते कल्पिताः स्वधिया, येन वितथताशङ्कास्पदं भवेयु.। किन्तु पूर्वप्राज्ञपुरुपेरिता इत्याह-'न्यायविदीरिता' इति। तत्र प्रमाणप्रमेयनयतद्बाधकफलप्रमातृव्यवस्थादेर्निश्चितोऽवबोधो न्याय, नितरामीयतेऽवच्छिद्यतेऽर्थोऽनेनेति 'भावाकर्त्रोरिति [५ ३।१८] घञा रूपनिष्पत्ते–रर्थयथार्थत्वनिर्णयसाधनानि च पूर्वोक्तान्येवेति तत्समुदायस्यैवेय सञ्ज्ञा, या चान्वीक्षिकीत्युच्यते, त विदन्ते-विदन्ति विचारयन्ति जानन्ति वेति क्विपि न्यायविद , तैरीरिता प्रतिपादिता । साधर्म्यदृष्टान्ते दोपोद्भवकारणव्याचिख्यासयाह–'अपलक्षणहेतूत्था' इति।

अपगतं लक्षणं पूर्वोक्तं यस्मात् सोऽपलक्षणोऽसिद्धत्वादिदोषदुष्ट, स चासौ हेतुश्चापलक्षणहेतुः । उत्थानमुत्था 'भिदादिभ्यो ऽङ्'इति अङ् । अपलक्षणहेतोरुत्थोद्भवो येषां तेऽपलक्षणहेतूत्थाः । नहि साध्यसाधके सद्धेतौ भवन्ति साधर्म्यदृष्टान्तदूषणानि । यद्वाऽपलक्षणस्य–दुष्टव्याप्तेर्हेतुरपलक्षणहेतु', स उत्थीयतेऽनयेत्युत्थोद्भवकारणं विद्यते येषां तेऽपलक्षणहेतूत्था । न हि सम्यगवधारितायां व्याप्तौ भवन्ति दृष्टान्ते दूषणानि, साध्यसाधनोभयास्पदस्य दृष्टान्ततयोपादानार्हत्वात् । न च सम्यग्व्याप्तिनिर्णयवतो मोमुह्यते मतिः कदाचनापि, साधर्म्यदृष्टान्तप्रयोगे व्याप्तिनिर्णयकाल एव साधर्म्यवैधर्म्यदृष्टान्तानां क्रोडीकरणात् । अन्यथा न प्रतिपन्ना स्यात् सम्यक्तया व्याप्तिरेव, तदन्तरेणाऽन्यथानुपपत्तितथोपपत्त्योरन्यतरस्यापि निर्णयाभावात् । दुष्टदृष्टान्तोपादानाच्च निर्णीयते निर्णयविदा यत्–नानेन व्याप्तिरवबुद्धा सम्यक्तयेति सुष्ठूक्तमपलक्षणहेतूत्थाः । अथ के ते दृष्टान्ताऽऽभासा.? इत्याह-'साध्यादिविकलादय' इति । सिषाधयिषितं साध्यं साध्यते प्रतिपित्सुभिरिति भावे'ऋवर्णव्यञ्जनान्तात्' [५।१।१७] इति ध्यण् प्रत्ययः । पूर्वोक्तलक्षणं तदादिर्येषां ते साध्यादय , आदिशब्देन साधनतदुभयान्वयग्रहणं, तैर्विकलो-रहित , स आदिर्येषां ते विकलादय., आदिशब्देन सन्देहाभावादिग्रहः । इदमत्र तत्त्वं-साधर्म्येण दृष्टान्ताऽऽभासा व्याप्त्यनवधारणमूला भवन्ति । ते च नवधा साध्यविकलः साधनविकल उभयविकल सन्दिग्धसाध्यधर्मा सन्दिग्धसाधनधर्मा सन्दिग्धोभयधर्माऽनन्वयोऽप्रदर्शितान्वयो विपरीतान्वयश्चेति । साध्यधर्मविकलो यथाऽपौरुषेय शब्दोऽमूर्त्तत्वात् दुःखवदित्यत्र शब्दे (दुःखे) नापौरुषेयतेति साध्यविकलता । एवं परमाणौ नास्त्यमूर्त्तत्वमिति तस्मिन् दृष्टान्तीकृते साधनविकलता । घटे त्वपौरुषेयत्वामूर्त्तत्वयोरेकमपि नेत्युभयविकलता । रागादिमानय वक्तृत्वान्मैत्रवदित्यत्र मैत्रे रागादिमत्त्वलक्षणसाध्यस्य सन्देह इति सन्दिग्धसाध्यधर्मा ।

रागादिमत्त्वेन मरणधर्मत्वे साध्ये साधनस्य रागादिमत्त्वस्य मैत्रे सदेहात् सदिग्धसाधनधर्मता । नाय सर्वज्ञो रागादिमत्त्वात् मुनि-विशेषवदित्यत्र मुनिविशेषे सर्वज्ञत्वरागादिमत्त्वरूपसाध्यसाधनयोरु-भयोरपि सन्देह इत्युभयसन्दिग्धधर्मा । इष्टपुरुषे दृष्टान्तीकृते व्याप्त्यभावादनन्वय. । व्याप्त्यप्रदर्शनेऽप्रदर्शितान्वय । विपर्यासेन व्याप्तिदर्शने यथोपरि यो योऽसर्वज्ञ स स रागादिमानिति विपरी-तान्वय । अत्र दृष्टान्तस्यानुमानाङ्गत्वाभावेऽपि तत्त्वत विपरीत-दृष्टान्तेन नानेन व्याप्तिः सुष्ठु गृहीतेति बोधोत्पत्ते, परेषां च मिथ्याबोधोत्पादान्सन्दाना श्रोतृणां स्पष्टैव दुष्टता । अनन्वयाऽ-प्रदर्शितान्वययोस्तु व्याप्तिमन्तरेण दृष्टान्तप्रयोगस्यानर्थक्यादेव दुष्टतेति ॥२४॥

एव अन्वयव्याप्त्यास्पदीभूतसाधर्म्यदृष्टान्तदोषानभिधाय व्यति-रेकव्याप्त्यास्पदीभूतवैधर्म्यदृष्टान्तदोषान् विभणिषुराह भट्टारक.—

वैधर्म्येणाऽत्र दृष्टान्ते, दोषा न्यायविदीरिताः ।
साध्यसाधनयुग्माना-मनिवृत्तेश्च संशयात् ॥२५॥

तत्र विरुद्धो धर्मो येषां ते विधर्माण. । पूर्ववदन्प्रत्यय । विरुद्धता च साध्यनिवृत्त्या साधननिवर्त्तनं, यतोऽत्र पक्षीकृते हि पर्वतादौ वह्न्यादे -साध्यस्य धूमादे. साधनस्य च सत्ता साधनीया । ह्रदादौ च नोभय वरिवर्त्येव कुतस्तरासन्वयः ? इति, तस्य भावो वैधर्म्य, तेन, । शेष पूर्ववत् । दृष्टान्ते दोषा न्यायविदीरिता इति । के ते ? कथ वा भवन्ति ? ज्ञेया वेत्याह-'साध्ये'त्यादि । साध्य-साधयितुमभिप्रेत वह्न्यादि, साधन-साध्यतेऽनेन साध्यमिनि 'रम्यादिभ्यः' [ ५ । ३ । १२६ ] इत्यने । यद्वा साधयति-ज्ञापयति साध्य यत्तत्साधन 'नन्द्यादिभ्य.' [५ । १ । ५२] इत्यनो 'नन्दि-वाशि-मदि-दूषि-साधि-

वर्धिशोभि-रोचेर्णं-रितिपाठात् कर्त्तर्यनः । नामैवेदमिति । साधन-धूमादि । युग्मं च प्रकरणात् साध्यसाधनयोरेव । तथा च साध्यसाधनोभयरूपं युग्मम्, पश्चात् साध्यं च साधनं च युग्मं चेतिद्वन्द्वस्तेषां, अनिवृत्ते:-निवर्त्तनं निवृत्तिर्व्यावर्त्तनमित्यर्थः, तस्या अभावात् वैधर्म्ये-दृष्टान्ते दोषा इत्यनुसन्धेयम्। वैधर्म्यदृष्टान्ते न साध्येन न च साधनेन नापि च तदुभयेन भाव्यम्। आद्ये, साध्यव्यतिरेकाभावेन साधनाभाववत्त्वेऽपि अन्यथानुपपन्नत्वानवगाहनात् । द्वितीये, हेतोरनेकान्तिकताऽऽपत्तिः, साध्याभावेपि हेतुसद्भावात्। अन्त्ये तु वैधर्म्यत्वमेव न, तस्य साध्यसाधनोभयाऽऽस्पदत्वेन साधर्म्यदृष्टान्तताऽर्हत्वात्। न केवलमनिवृत्तेरेव साध्य-साधनयुग्मानां वैधर्म्यदृष्टान्ताभासत्वं, किन्त्वन्यथापि । कथ ? चेदाह-तत् सशयात् प्रागुक्ताना साध्यसाधनयुग्माना सशयात । तत्र त्रिष्वप्य-न्यथानुपपत्तिनिर्णयाभावात्। चोऽप्यर्थे। स च समुच्चये। तथा च संशयादपि, न केवलमनिवृत्तेः केवलाया इत्यर्थः । यद्वा-चकारो-ऽनुक्तानामव्यतिरेकादीनां सूचनाय। तथा च नवधैव वैधर्म्येणापि दृष्टान्ताऽऽभासा तद्यथा-असिद्धसाध्यव्यतिरेकः असिद्धसाधनव्यतिरेकः असिद्धोभयव्यतिरेकः सन्दिग्धसाध्यव्यतिरेकः सन्दिग्धसाधन—व्यतिरेकः सन्दिग्धोभयव्यतिरेकोऽव्यतिरेकोऽप्रदर्शितव्यतिरेको विप-रीतव्यतिरेकश्चेति । तत्र भ्रान्तमनुमानं प्रमाणत्वात्, यन्नैवं तन्नैवं यथा स्वप्नज्ञानमित्यत्र स्वप्नज्ञानाद् भ्रान्तत्वलक्षणसाध्यस्य निवृत्तिर्नेत्य-सिद्धः साध्यस्य व्यतिरेकः। निर्विकल्पकं प्रत्यक्षं प्रमाणत्वात्, यत् सविकल्पकं न तत् प्रमाणं लैङ्गिकमिवेत्यत्र च लैङ्गिकात् प्रमाण-त्वलक्षणसाधनस्याऽनिवृत्तिः । नित्यानित्यः शब्दः सत्त्वात्, यो न नित्यानित्यः स न सन्, यथा स्तम्भोऽत्र स्तम्भान्न नित्यानित्य-त्वं व्यावृत्तं न च सत्त्वं, तथा चोभयव्यतिरेकः। असर्वज्ञ कपिलो-ऽक्षणिकैकान्तवादित्वात्, यस्तु सर्वज्ञः स नाक्षणिकैकान्तवादी, यथा तथागतोऽत्र तथागतादसर्वज्ञत्वनिवृत्तेः संशय इति सन्दिग्धसाध्य-

व्यतिरेकः। अनादेयवचनोऽयं रागादिमत्त्वात्, यस्त्वादेयवचनः स न रागादिमान् यथा सुगतोऽत्र सुगताद्रागादिमत्त्वनिवृत्तेः संशयात्सन्दिग्धसाधनव्यतिरेकः। न आप्तः कपिलः करुणाधामनि करुणया निजकललानर्पणात्, यस्तु आप्तः स तु न तथा यथालोकजित्। अत्र लोकजितोऽनाप्ततायाः करुणया कललानर्पणायाश्च निवृत्तौ संशयात् सन्दिग्धोभयव्यतिरेकः। न वीतरागोऽयं वक्तृत्वात्, यो नैवं स नैवं यथा स्तम्भ इत्यव्यतिरेकः। अनित्यः शब्दः कृतकत्वात् यथाऽऽकाशमित्यप्रदर्शितव्यतिरेको। यतो नाऽत्र व्यतिरेकः प्रदर्शितः। तथा तत्रैव यत् कृतकं तदनित्यमिति विपरीतव्यतिरेकः इयं साधर्म्यदृष्टान्तोपयोगिनी व्याप्तिरितिकृत्वा। अव्यतिरेके हि प्रावावयवे जडत्वान्नान्यथानुपपन्नत्वनिर्णयः। अप्रदर्शितव्यतिरेकस्तु साधर्म्यदृष्टान्तभ्रान्तिकृत्। विपरीतव्यतिरेकश्च स्पष्ट एवान्वयव्याप्तितया साधर्म्यदृष्टान्तोपयोगीति प्रयोक्तुरज्ञानमेव ज्ञापयेदिति। अत्रानन्वयाप्रदर्शितान्वयौ साधर्म्यदृष्टान्तेऽव्यतिरेकाऽप्रदर्शितव्यतिरेकौ च वैधर्म्यदृष्टान्ते न दूषणतयाऽभिमतौ कैश्चित्, दृष्टान्तस्यावश्यकत्वाभावात्।

एवं पक्षहेतुदृष्टान्तदोषानभिधाय साम्प्रतं वादस्थलोपयोगिनौ दूषणतदाभासौ निरूपयन्नाह—

> वाद्युक्ते साधने प्रोक्त-दोषाणामुद्भावनम्।
> दूषणं निरवद्ये तु, दूषणाऽऽभासनामकम् ॥२६॥

वादिनोक्ते वाद्युक्ते, को वादी? कथं वा वादः? इति। तत्रार्थे विशेषमधिजिगांसुभिरेतैरेव पूज्यपादैः कृतं वादोपनिषद्वादिसर्वस्वाभिधानम् द्वात्रिंशिकाद्वितयमवलोकनीयम्। ग्रन्थान्तरं ह्येते इतिकृत्वा नावतारिते। अत्र स्याच्च तदवतारे प्रस्तुतप्रकरणार्थस्य गौणतमता, तयोरतिभूयिष्ठतरार्थगर्भितत्वादिति। सङ्क्षेपतस्तु

तावत् स्थानाऽशून्यार्थमुच्यते किञ्चित्-विरुद्धयोर्धर्मयोरेकधर्मव्यवच्छेदेन स्वीकृततदन्यधर्मव्यवस्थापनार्थं साधनदूषणवचनं वादः। वादि-प्रतिवादि-सभ्य सभापतयश्चत्वारि अङ्गानि। प्रमाणतः स्वपक्षस्थापन-प्रतिपक्षप्रतिक्षेपौ वादिप्रतिवादिनोः कर्म। प्रतिभाक्षान्तिमाध्यस्थ्यै-रुभयाभिमताः सभ्याः। अग्रवादनिर्देशतत्त्वप्रकाशनकथाफलकथना-न्येषां कर्माणि। प्रज्ञाऽऽज्ञैश्वर्यमाध्यस्थ्ययुक्तः सभापतिः। कलहव्यपोह-जयादिनिर्देशादिकं चास्य कर्म। अत्र वादीतिनिर्देशेन तावज्जैनैरुद्धती-भूयोच्छृङ्खलवद्वादायावतरणीयं न, वादरणाङ्गणेऽवतीर्णे चास्मिन् यथा-योगं यतितव्यमेवावश्यं विज्ञाय गुरुलाघवं द्रव्याद्यपेक्षया धर्मवादा-दाविति ज्ञापयति। धर्मवादादिलक्षणं चेदं—

शुष्कवादो विवादश्च, धर्मवादस्तथा परः।
इत्येष त्रिविधो वादः, कीर्तितः परमर्षिभिः॥ १ ॥

अत्यन्तमानिना सार्द्धं, क्रूरचित्तेन च दृढम्।
धर्मद्विष्टेन मूढेन, शुष्कवादस्तपस्विनः॥ २ ॥

लब्धिख्यात्यर्थिना तु स्याद् दुःस्थितेनाऽमहात्मना।
छलजातिप्रधानो यः, स विवाद इति स्मृतः॥ ३ ॥

परलोकप्रधानेन, मध्यस्थेन तु धीमता।
स्वशास्त्रज्ञाततत्त्वेन, धर्मवाद उदाहृतः॥ ४ ॥

पूर्वैरभियुक्ततरैरुक्तमेव। फलं चाप्येतेषां वादानां स्पष्टतर-मुक्तमेव नात्र प्रस्तूयते। किन्तु न तत्प्रस्तावमर्हति। वाद्युक्ते क्वेत्याह-'साधने' इति। साध्यते-प्रतिपाद्यते स्वाभिमतोऽर्थोऽनेनेति 'रम्या-दिभ्यः' [ ५। ३। १२६ ] करणेऽने साधन-पक्षहेतुदृष्टान्तादि, तस्मिन्, वादिना स्वाभिमतधर्मव्यवस्थापनायेतरधर्मव्यवच्छेदाय वा प्रयुक्ते पक्षादौ। यद्वा-अकारप्रश्लेषादसाधनेऽध्यक्षलिङ्गलोकस्ववचन-

बाधितपक्षासिद्धविरुद्धानेकान्तिकदोषबाधितहेतुसाध्यविकलाद्यसिद्ध-साध्यव्यतिरेकादिबाधितदृष्टान्तत्वेन कुत्सितेऽनुमाने, नञः कुत्सार्थत्वात्। तत्र किमित्याह-'प्रोक्तदोषाणामुद्भावन'मिति। तत्र प्रकर्षेण यथार्थतयोक्ता ये पक्षाभासाद्या विपरीतव्यतिरेकावसानास्तेषामुद्-ऊर्ध्वम्, नह्यसमापिते पक्षे वादिनां प्रोक्तुं प्राञ्जलं प्राञ्जलस्य प्रतिवादिन इति ज्ञापनाय। नायमुपसर्गस्तस्य धातुनैव योगे तथासञ्ज्ञत्वात्। अभावनमप्रकाशनं यत्तत् दूषणं दोष एव प्रतिवादिन इतिशेषः। अयं हि न्यायोपनिषद्वेदिनां नियमो, यदुत-वादिनोक्तं साधनं चेद्दुष्टम्, न च प्रतिवादिना तद्विभावितं-ज्ञातमपि, तदा प्रतिवादी निग्रह-स्थानापन्न इत्युद्घुष्यावसाय्यते कथा यतो नानेन चेद्वादिपक्ष-दूषणमप्यवबुद्धमवबुद्धं वा न सम्यक्तया प्रतिपादितं कथङ्कारं विधातासौ तत्खण्डनं स्वाभिमतसमर्थनं वेति। तदुक्तमाक्षपादीये निग्रह-स्थानप्राप्तस्यानिग्रह' इति पर्यनुयोज्योपेक्षणाभिधानमिदं 'निग्रहस्थान-मापद्यते प्रतिवादी नानुयोजयति चेद्वादिनं दुष्टसाधनं प्रयुञ्जानम्। न चाऽऽरेक्यं नेदं दुष्टसाधनं निग्रहस्थानमिति। यतोऽवाचि निग्रह-स्थानमन्त्यं हेत्वाभासाश्च यथोक्ता इति। न च केवलानां हेत्वा-भासानां दोषतयाऽऽख्यानं, किन्त्वन्येषामपि प्रत्यक्षविरुद्धसाध्यादीनां सम्भवे भवन्त्येव पर्यन्ते प्रतिज्ञाविरोधहानि-सन्न्यासतदन्तरादीनि निग्रहस्थानानीति सुष्ठूक्त-वाद्युक्तेऽसाधने साधने वा विद्यमानानां दोषाणामनाविष्करणं प्रतिवादिनो दूषणमेव। एवं दूषणस्यानुद्भावने दोषमुदीर्यान्यथापि दोषसम्भवमाह-'निरवद्ये त्वि'त्यादिना। तत्र नोद्यते—न वा वदितुमर्हमित्यवद्यं 'वद्योपसर्याऽवद्यपण्यमुपेयर्तुमती गर्ह्यविक्रेये [ ५ । १ । ३२ ] इति यणि वृद्ध्यभावे रूपनिष्पत्तिः। निर्गतमवद्याद्-गर्ह्यान्निर्दूषणत्वान्निरवद्यं तस्मिन्निति। साधन इति गम्यमत्रापि। तु. साधनविशिष्टतादर्शनपूर्वकं दूषणस्य दूषणाऽऽ-भासत्वसूचनाय, विशेषणार्थत्वात् तस्य। तथा च बाधादि—

रहिते साधने पक्षादौ दूषण-बाधादिसद्भावोद्गिरणं यत्प्रतिवादिना क्रियते तत् किमित्याह-'दूषणाऽऽभासनामक' इति। तत्र दूष्यतेऽनेन पक्षादिर्वादीवेति दूषणम्। 'रम्यादिभ्यो०' अने बाधादिस्तत्प्रकाशनं वा तद्वदाभासते इति दूषणाऽऽभासः। 'कर्मणोऽण्' इत्यणि। स नामाभिधानं यस्यासद्दोषप्रकाशनस्य तद् दूषणाऽऽभासनामकम्। शेषाद्वा [ ७।३।१७५ ] इतिकच्। अत्रेदमवधेयम्, यथाहि-वाद्युक्ते कुत्सिते साधने विद्यमानानां दोषाणामनुद्भावने प्रतिवादिनो मातृशासिततां गमयति। प्राप्नोति चासौ तेनैव पूर्वोक्तवद् निग्रहस्थान,एवमेव वादिना निरवद्ये साधने प्रतिपादिते यदलीकमुद्घुष्यने दूषणं,तदपि प्रतिवादिनो वादानर्हतां ज्ञापयित्वा त निग्रहस्थानीकरोत्येव। यतोऽसौ सम्भाव्यतेऽनुमानस्वरूपावगमायापि नालं, किमुत तस्य निराकरणायेति। यद्वा-वृत्तिकारकोऽय जडशेखर केनचिदध्यापितस्य, कथमन्यथैवंविधे समीचि साधने दूषणोद्घोषण स्वस्यैव निग्रहस्थानापादुकमाभापेतेति। तदुक्तं गौतमीये-'अनिग्रहस्थाने निग्रहस्थानाभियोग' इति निरनुयोज्यानुयोग इति। सम्यगुदितं दिवाकरपादैर्यदुत-निरवद्ये तु दूषणाऽऽभासनामकमेव तद्दूषणमिति। क्वचित्प्रत्यन्तरे द्वितीय पाद एवं दरीदृश्यते-'यत दोषाणामुद्भावन'मिति। अत्र च यदि केनापि पण्डितमन्येनोदभावनमित्यस्यागतिकत्वमाकलय्येद लिपीकृतम् 'भवेदि'तिसंभाव्यते तदापपाठ एवाय। यदि चादेशान्तरमिद स्यात्तदा तु व्याख्यैवं कार्या-पक्षादिदूषणानि प्रतिपादितान्यथ च तानि वादस्थले योजयं-स्तस्य सत्येतरतया विभागमाह—'वादी'त्यादि। तत्र वाद्युक्तेऽसाधने प्रोक्तदोषाणां बाधादीनामुद्विभावन उत्-प्राबल्येन यथा बाधादिसम्पन्नं तथैव सम्यगनूद्य विभावन-प्रकटीकरणमुद्घोषणमिति यावत्। तदेव वाद्यपेक्षया पक्षादिदूषकत्वाद्दूषणं दोष इति कथ्यते। पर प्रतिवादी चेत्प्रतिपत्तिशून्यो निरवद्य साधने ब्रूयाद् बाधादिकं दोषजालमसन्त नैतावता वादिपक्ष. पराभूतो भवेत्किन्तु तत्प्रतिवाद्य-

दीरितं वच एव दूषणाऽऽभासतया दूषणमिति ज्ञायते वादरणांगणगणकैः। अन्यथापि भावनीयमेतन्मात्राग्रह आगमानुसारिणामिति।

एवं च प्रत्यक्षपरोक्षप्रमाणं सप्रपञ्चं पक्षादिस्वरूपं च सबाधं निरूप्य प्रमाणस्य फलम् निरूपयितुकामाः सूरिपादाः फलमाश्रित्य केवलस्याऽऽलोकितलोकाऽलोकस्य भिन्नरूपत्वात्तत्स्वरूपमेवादौ प्ररूपयन्त आहुः—

सकलावरणमुक्तात्म, केवलं यत्प्रकाशते।
प्रत्यक्षं सकलार्थात्म सततप्रतिभासनम् ॥२७॥

तत्र सकलानि—समस्तानि, आवरणानि—आव्रियन्ते ज्ञानान्येभिरित्यावरणानि ज्ञानावरण-दर्शनावरण-मोहान्तरायाणि, घातित्वादेषाम्। यद्वा—ज्ञानस्याधिकृतत्वाज्ज्ञानावरणीयान्येव, तैर्मुक्तो—रहितः, आत्मा—स्वरूपं यस्य तत् सकलावरणमुक्तात्म। अत्र चावधेयमिदं—यत् केवलावरणेनावृतस्य जीवसूर्यस्य या प्रभा तच्छाद्मस्थिकं ज्ञानम्। यतो न तत् कदापि निरावरणमुपलभ्यते, पूर्वोक्तयुक्तेः। अथ तत्रापि मतिज्ञानावरणादि कटादिवदावृणोत्येव ज्ञानमात्राम्। न च वाच्यं यन्नावृतं केवलालोकावरणेन तत् कथमिवावरीतुं शक्नुयान्मतिज्ञानावरणादि छाद्मस्थिकम् ज्ञानमिति। प्रबलतमपयोधरपटलेनाप्यप्रतिहतस्य तेजोभरस्य कटादिनावरणस्योपलब्धेः। तत्रापि तिष्ठत्येवानावृत प्रदेशाष्टकं जीवस्वाभाव्याद् अन्यथा न स्याच्चेतनानामपि। न चैव कर्मानुभवोऽपि। न च तदनुभवाभावे स्यात् कर्मविशरारुता। तथा चोपलभ्यमानायाः शुद्धेरप्यनुपलम्भ इत्यवश्यमनावृतापि काचनमात्रा स्वीकार्या सुधीभिः। अथ कटादीनां छिद्रेण यथाऽऽगच्छति तेजः आवृतस्यापि पयोमुक्पटलप्रचयेनार्कस्य, तथा मतिज्ञानावरणादीनां क्षयेण य इन्द्रियाऽनिन्द्रियाद्युद्भवो बोधः स तत्तत्क्षयोप-

शमोत्थत्वेन तत्तन्नाम्ना व्यपदेशमाप्नोति। यथा मतिज्ञानं श्रुत-ज्ञानमित्यादि। अत एव च मतिज्ञानादयः क्षायोपशमिका भावा भण्यन्ते। छाद्मस्थिक च पठ्यते तच्चतुष्टयमपि ज्ञानानाम्। यतो न तद्नावृतम्। परं यदा केवलज्ञान सकलार्थस्वरूपज्ञापनसमर्थं प्रादुर्भवति तदावश्य मत्याद्यावरणाना केवलावरणस्य च क्षयः। न चेद् केवला-वरणमंशतोऽपगच्छति, किन्तु सत्यां देशादिसामग्र्यां सर्वथा तत्क्षयो भवतीति। अत एव नैतत्क्षायोपशमिकं, किन्तु क्षायिकमेव समूलकाषं-कषितत्वात् मतिश्रुतावधिमनःपर्ययावरणानां केवलावरणस्य च। भवति च केवलज्ञानावरणीयादिक्षयस्य समकालमेव केवलदर्शना-वरणीयान्तरायादे क्षयोऽपि आमूलचूलम्। दर्शनमोह–कषायनो-कषायमोहक्षयस्त्वर्वागेव।

'केवलियनाणलभो नन्नत्थ खए कसायाण'ति वचनात्। तथा च अशेषज्ञानावरणादिक्षयप्रभावाऽवाप्ताऽशेषपदार्थसार्थसाक्षात्कारि – केवलालोकशालिनां न किञ्चिदप्यन्तरायादि लेशतोऽपि भवतीति युक्तमुक्तं विशेषणं यत् 'सकलावरणमुक्तात्मे'ति। ईदृशं किमित्याह-केवलमिति। अत्र पदैकदेशे पदसमुदायोपचारात् केवलमितिपदेन–केवलज्ञानम् ग्राह्यम्। तत्र केवलमेक-मत्यादिनिरपेक्षम्। यथाहि-मति-पूर्वं श्रुतमितिवचनाच्छ्रुतज्ञानस्य मतिसापेक्षता, अवधौ च ग्रैवेयकाद्य-मरैः स्वालयस्थैः पृष्टपुरुषोत्तमप्रष्टो यानि मनोद्रव्याणि परिणमयति तान्यवेक्ष्यानुमानादभिधेयमवबुध्यतां सुरवराणां मत्यपेक्षा, मनः पर्यायेऽपि च तद्गतामपरचिन्तितबाह्यार्थज्ञानेऽनुमानापेक्षा, नैवं तथाऽत्रेत्यस्य यथार्थैव मत्यादिनिरपेक्षता। केवल वा शुद्धम्। यथाहि-मत्यादिज्ञानानि सावरणस्यापि जीवस्य प्रादुर्भवन्ति, नैवेदं तथेति क्षायिकमेवेदम्। तानि च क्षायोपशमिकान्येवेति। केवलं-सकलम्। यथाहि-मतिश्रुते आदेशेन सर्वद्रव्याऽसर्वपर्यायविषये, अवधिज्ञान रूपिविषयं, मनःपर्यायं तु मनोमात्रविषयमिति तानि 'परिमितविष-

याणि, न सकलार्थगोचराणि। इदं तु भूतभवद्भविष्यद्रूप्यरूपिसकलार्थ-विषयमिति। अथवा-यथा मत्यादीनि न प्रथमत. सम्पूर्णान्युत्पद्यन्ते, किन्तु यथा कथञ्चिदुत्पद्य पश्चाद्वृद्धिमवाप्नुवन्ति। नैवमिदं, किन्तु तत्प्रथमतयैवोत्पन्नमात्र सकलानर्थान् साक्षात्करोति। ततः सकलमेवेदम्। असाधारणं वा केवलम्। यथाहि—मतिज्ञानादीनि यदा यदा तदुपयुक्त आत्मा भवति, तदा तदा स्वविषयान् प्रकाशयन्ति। केवलं तु आरभ्य उत्पत्तेः सर्वकालं स्वविषयाणां साक्षात्कारं कारयत्येवानुसमयं तद्वत इत्यसाधारणता। यद्वा-अनन्त केवल। यतः सान्तान्येव मतिश्रुतावधिमन.पर्यायाणि, केषाञ्चित्प्रतिपातसम्भवात् स्वत, केषाञ्चित् केवलोपलम्भे विगमात्। केवलं तु न कदाचित्प्रतिपतति। न च वाच्यं सिद्धत्वावाप्तावन्यदेव ज्ञानं, आत्मस्वभावरूपस्यैव केवलत्वात्तदेव च प्रथमत आविर्भूतमिति न तस्य सान्तत्वम्। यद्वा-अनन्तपदार्थविषयत्वादनन्तम्। अनन्तमिति हि सङ्ख्या तेन नावगमविरोध, ज्ञानमपि चेद् तथाभूतमेव तेनानन्तत्वेन न ज्ञानाविषयत्वमपि तस्य। यद्यप्यवध्यादिष्वप्यस्त्येवानन्तपदार्थविषयता. तथापि सा रूपि-मर्यादयाऽनन्तसङ्ख्याके पुद्गलवज्जीवाकाशे अपि स्त एव। न चैते अवलोकयत्यवध्यादिमान् अरूपित्वादेतयोस्तदिदमेवानन्तसङ्ख्यावच्चावत्पदार्थगोचरम्। केवलं च तज्ज्ञानम् च केवलज्ञानं-तत् 'यदि'ति। यत्किमपि सदसत्सामान्यविशेष—नित्यानित्यवाच्यादिरूपमर्थजात प्रकाशते—उपलभते। यद्यप्यात्मैवोपलब्धा, ज्ञानं तु साधनमुपलम्भस्य, तथाप्यभिन्नत्वात् कथञ्चिद् गुणगुणिनोरेवं व्यपदेश.। यद्वाऽस्त्येव ज्ञानस्याप्युपलम्भकता। न भवेदन्यथा स्वान्यावभासकताऽस्येति। तत् कीदृशमित्याह-'प्रत्यक्ष'मिति। अक्षो हि जीवः पूर्वव्युत्पादितरीत्या, तं प्रति गतं प्रत्यक्षमितिविग्रहाज्जीवमात्रापेक्षं, नान्यज्ञानवदिन्द्रियानिन्द्रियादिव्यपेक्षाऽत्रोपयोगापेक्षापि चेति। तत् किंविधं प्रत्यक्षं ? यतः प्रागवधारिते द्वे प्रत्यक्षे पारमार्थिक—

प्रत्यक्षभेदभूते सकलं विकलं चेति चेत्। सकलमिदमित्यभिप्रेत्याह—'सकलार्थात्म सततप्रतिभासन'मिति। सकला-अशेषा', न कोपि पदार्थ एवंविधोऽस्ति अभूत् भविष्यति वा यो न प्रतिभातः सकलप्रत्यक्षरूपे केवले। तदुक्तं—'त नत्थि जं न पासइ भूअं भव्व भविस्स च'त्ति। तादृशा येऽर्था अर्यन्ते-गम्यन्ते 'ऋ गता'वित्यस्मात्'कमिप्रुगीर्त्तिभ्यस्थ' इति थेऽर्थाः—धर्माधर्माकाशपुद्गलजीवास्तेषामात्मा—स्वभावो गुण-पर्यायादि, नह्यस्ति व्यतिरिच्य गुणपर्यायानन्यो द्रव्यस्वभावः, तयो-रन्योन्यमेवरूपतया मीलितत्वात्। यदाह—

'दव्व पज्जवविजुअ, दव्वविजुआ य पज्जवा नत्थि'त्ति श्रीपूज्य-वचनात्। अन्यत्रापि—

'द्रव्यं पर्यायवियुतं, पर्याया द्रव्यवर्जिता।
क कदा केनचिद्दृष्टा द्रष्ट्रा मानेन केनचित् ॥१॥

अत एवोक्तं पूज्यपादै — उप्पायठिइभगाइ हंदि दविणल-क्खणमेय। यद्वा-अर्थाश्चात्मानश्च स्वभावा अर्थात्मानः,सकलाश्चतेऽ-र्थात्मानश्चसकलार्थात्मानोऽत्र द्रव्यशब्देन गुणक्रियाश्रयग्रहणम्, आत्म-शब्देन च तत्स्वभावभूतानां पर्यायादीना ग्रहणम्। द्वन्द्वादौ द्वन्द्वान्ते च श्रूयमाणं पद प्रत्येकमभिसम्बध्यते' इति उभयत्र सकलपदान्वयाच्च सर्वद्रव्यसर्वपर्यायसमावेशः। न च गुणानामग्रहणान्न्यूनत्वम्। गुणा अपि पर्याया एव। यत' पर्यायशब्देन परिणामग्रहणात्। परिणामश्च 'तद्भाव परिणाम' इतिलक्षण.। भवति च गुणानामपि द्रव्ये भावता। अत एव च द्रव्यार्थिक-पर्यायार्थिकेतिनयद्वयमेव, न तु गुणार्थिक इति तृतीयोऽपि। ननु यदि न गुणा पर्यायेभ्यः पृथक्किमिति 'गुण-पर्यायवदि'त्यत्र पृथग्गुणग्रहणमिति चेत्? सत्यम्, तत्र हि गोबलीवर्द-न्यायेन गुणानां प्राधान्यख्यापनार्थं पार्थक्यम्। प्राधान्य च तेषां ज्ञान-दर्शनादिवत् सहभावित्वेन क्रमभाविभ्यो देवत्वनरत्वादिपर्यायेभ्यः

स्पष्टमेवेति । न च वाच्यं यावत्पर्यायसाक्षात्कार कथमिव सम्पद्यते ? अतीतानागतानां विनष्टानुत्पन्नत्वेन ग्रहणासम्भवात्तदग्रहणे च कथं स्याद् द्रव्यसाक्षात्कारोऽपि सर्वथा । यत:—

'एगदवियमि जे ऊत्थपज्जवा वयणपज्जवा वावि ।

तीयाणागयभूआ तावतिअ तं हवइ दव्वं ति वचनात् । सर्वपर्यायरूपत्वाद् द्रव्यस्येति । ज्योतिषशास्त्रेण यथाऽस्पष्टं विज्ञायतेऽनुद्गतमपि चन्द्रोपरागादि प्रश्नादेशेनातीतमपि विचारादि, तथा केवलवेधसोभयोरपि साक्षात्कारात् अतीतस्यातीतत्वेनानागतस्यानागतत्वेनावगमाच्च न वितथता । भवति चैवमेव केवलज्ञानस्यापि सद्भावत्य-निबन्धनीभूतोत्पाद व्यय-ध्रौव्ययुक्ततापि, वर्त्तमानपर्यायाणामतीतत्वभावात् प्रतिसमयमनागतानां च वर्त्तमानताभावात् ज्ञानस्य च ज्ञेयानन्यत्वात्तत्तद्रूपेणोत्पादविनाशौ केवलेन रूपेण ध्रौव्यं चेति । नह्यस्ति तत्किमपि द्रव्यं चराचरेऽपि लोके यन्नानेन पदार्थत्रयेण व्याप्तम् ।

न च नास्त्येव सकलार्थविषयकं ज्ञानम् । यतो हि यत्प्रमाणपञ्चकातिक्रान्तं वाच्य तदभावप्रमाणगोचरमेव । न चात्रास्ति प्रमाणेनोपलब्धिः । प्रमाणाधीना च पदार्थव्यवस्थिति. । उपलभ्येत चेत् प्रमाणेन तत्सद्भावः, केन ? प्रत्यक्षेणेतरेण वा ? । न तावत्प्रत्यक्षेण, तस्येन्द्रियगोचररूपादिविषयत्वादैन्द्रियकस्य मानसस्य च केवलस्य स्वात्मगुणादि साक्षात्कारनियमात् । अन्यच्च तेनाध्यक्षमेव गृह्यते । न चेदमध्यक्षं, भवन्मनेनैव साम्प्रत तदभावादिति । न च तद्भावकालेऽप्यवगम्येत तत्तज्ज्ञेयज्ञानशून्यै गान्धिकवद्रत्नपरीक्षकता । तद्भवं च विवादास्पदमेव । न चानुमानादिना तदितरेणाप्यवगम्यते । यतोऽनुमान तावत् प्रत्यक्षपूर्वकं, लिङ्गलिङ्गिसम्बन्धग्रहणस्मरणपूर्वकत्वाच्चस्य । न चावरणस्य देशतो हान्या सर्वहानेस्तारतम्यात्सर्वोपलम्भस्य च सिद्धि', तथा सति चैतन्यस्यांशत आवरणोपलब्धेर्भवेदेव सर्वथावरणात् भवतामप्य-

निष्टतमस्य चेतनाभावस्याप्यापत्तिर्जीवस्योत्पतनादौ तारतम्ये च सत्यपि न परम. प्रकर्षो यावज्जीवमभ्यस्यतामप्युपलब्धस्तथा वाच्यतापि न सर्वज्ञत्वसाधिका, किन्तु पदार्थप्रचयपरिचयेन कल्पितैव सेति। नहि प्रत्यक्षा सर्वविषयवाच्यतापि स्वीक्रियते। किमिति चेदनुमानेन न चास्ति व्याप्तिस्तादृशी यदनुमानकल्पितमपि कस्यचित् प्रत्यक्ष भवत्येव। न च ज्योतिषचिकित्सादिशास्त्रप्रणयन तत्समर्थकं, मतभेदेन तस्य भेदोपलम्भात्। सर्वज्ञमतमपि भवेत्तथैव विरोधमधिरोहत्। न चागमेन साध्येत तत्सद्भावो, येन परस्परविरुद्धवाच्यव्याख्याका हि आगमाः, कथमिव यथातथ वस्तु प्रतिपादयेत् सर्वज्ञताख्यम्। अन्यच्चागमोऽपि सर्वज्ञतालङ्कृतोक्तत्वेन प्रमाणीक्रियेताऽन्यथा वा?। आद्येऽन्योन्याश्रयः। सर्वज्ञतासिद्धावागमप्रामाण्यसिद्धेस्तत्सिद्धौ च सर्वज्ञतासिद्धेरिति। अन्यप्रतिपादितस्य प्रामाण्ये तु न तदवितथम्। न चातज्ज्ञायकस्तत्प्ररूपक आप्तो भवेत्, न चानाप्तप्ररूपित विद्वद्भिराश्रीयते प्रमाणतया। उपमानं तु कथमिव भवेत् उपमानोपमेययोर्द्वयो· प्रत्यक्षेणैव तत्प्रामाण्याभ्युपगमात्। न चात्रोपमानभूत उपमेयभूतो वा वेविद्यते वा प्रत्यक्षं, येनोपमेय सर्वज्ञतास्पदत्वेन गृह्णीथ यूयम्। अर्थापत्तिस्त्वर्थानुपपत्तिकल्पिता भवेत्, न चात्रास्ति कोऽपि तथाविधोऽर्थो, यो न सर्वज्ञतामन्तरेण सम्भवी भवेत्। जीवधर्मपदार्थबोधस्त्वागमाद्वेदरूपादपौरुषेयादेवेति प्रमाणपञ्चकातिक्रान्तत्वादभावप्रमाणविषयमेवेद सर्वज्ञत्वमितिवाच्यम्।

यतो यत्तावदुक्त प्रमाणपञ्चकातिक्रान्तत्वादभावविषयमिदमिति। तदेवासिद्धम्। यतो या प्रत्यक्षस्याप्रवृत्तिरेव तावद्भवद्भिरुक्त, सा किं भवदीयप्रत्यक्षस्य केवलस्य किं वा यावत्प्रत्यक्षस्य?। आद्ये, न सोऽस्ति नियमो, यदुत–भवद्भि सर्वं प्रत्यक्षमीक्षणीयं प्रत्यक्षेक्षणीय, द्वीपान्तरादे परमाण्वादेश्च प्रत्यक्षमेवानीक्षणात्। अन्त्ये, भवानेव सर्वज्ञतास्पदं, अतीन्द्रियाणामनिन्द्रियाणामशेषाणां प्रत्यक्षाणामवगमात्।

नन्वेव न किञ्चिदपि भवेदभावप्रमाणगोचरं चेन्मा भवतु तथाभूता-ऽसत्यवादनिबन्धनं, का नो हानि.। स्वज्ञानमपेक्ष्य वा भवतु। न च तेन परवस्तुप्रतिषेधो भवति । योग्यस्यानीक्षणे योग्यस्थले सत्यां-योग्यतायां हि स्यात्प्रतिषेध.। न चैवं भवतामिति प्रतिपादितमेव। न च नास्ति इन्द्रियानिन्द्रियप्रत्यक्षमन्तरेणान्यत्प्रत्यक्षमिति शक्यं वक्तुम् भवता, तत्प्रतिषेधकप्रमाणाभावात्। अतद्वानपि चावबुध्यत्येव तद्वन्तं, संशयाविर्भावनिराकरणादिनाऽचतुर्वेद्यपि जानात्येव चतुर्वे-दिनम् । गान्धिकोऽपि वेत्त्येव रत्नपरीक्षकान् येन केनचित् पृष्ट. सन् साधयत्यसौ स्पष्टं याह्यमुकस्य रत्नपरीक्षकस्य पार्श्वे इति। न च संशयनिराकरणादिना नावबुध्यते सर्वज्ञतावत्त्व, तस्यानिन्द्रियविषय-तयातीन्द्रियवेदनवेद्यत्वात्। अन्यच्च रूपिपदार्थप्रकाशनपटुभिरप्यसौ ज्ञायत एव तथाविधमनोवत्तादर्शनात् कर्मपरमाणुवर्गणायाः प्रति-बन्धिकाया अनुपलम्भाच्च । ऐन्द्रियकेनाप्यध्यक्षेणावगम्यत एव तत्सत्ता, प्रोक्तातीन्द्रियार्थसंवाददर्शनात् । वेत्त्येव च तद्वानैन्द्रिय-कर्मापि। अत एव 'आवीकम्म'ति पठ्यते। एवं श्रुतेनापि कथमिव न तत्सत्ता ज्ञायेत तत्काले। यतस्तत्रापि पदपङ्क्त्यादेः प्रकल्पिता-वबुद्धग्रथितावबोधितार्थस्य विप्रकृष्टस्य च संवादस्थलस्य सत्त्वमप्रति-पन्न न। ततस्तदा परेणाप्याप्तवचनविश्वासरूपादागमादुपमानादिना-च वेत्तु शक्यत एवेति न तदानीमनवबुद्धसत्ता सर्वज्ञत्वस्य । इदानीं तु ये तथाविधज्ञानवन्तस्तेषा प्रत्यक्षीकरणे कः प्रतिस्खलनपटुता-माप्नोति। अस्मदादीनां तु तथाविधज्ञानाऽभावात्तदप्रत्यक्षे न तदभावो-ऽन्यथा परमाणुप्रभृतीना स्यादेवाभाव. । स्यादेव च भवदीया-त्मनोऽप्रत्यक्षत्वाद्भवतामेव जडत्वापादयित्री चैतन्यशून्यता । तथा चेत्किं जडेन सह वार्त्ताप्रसङ्गेन। अनुमीयते चेदात्मेति। समानमेवैत-द्भवदुक्तसर्वज्ञत्वानुमानेन तस्यापि कदाचिन्न यत् प्रत्यक्षं येन सम्बन्ध-ग्रहण स्यादित्यल प्रसङ्गानुप्रसङ्गेनेति।

'यच्चोक्तं नानुमानं तद्ग्राहकं तद्धि प्रत्यक्षपूर्वक'मित्यादि। तद्युक्त-मुक्तमयुक्तं तूक्तम्। यत् कदा भवानभूद् ग्रहगृहीतो, यदपरं यथा तथा लपमानमवेक्ष्य वक्ष्यति-यदय ग्रथिल इति। ज्ञातस्तथाचेदल वादेन। आप्तादवधारणे तु तल्लिङ्गस्य न तथ्यता, ग्रहिलतायां स्वकृतभानानु-पलम्भात गृहीतत्राभानाच्च' स्वस्थतायां तु कुतस्त्य तद्भान स्यात्। अन्यैश्च ग्रहिलता नैवानुभूता। तत्रापि तथाप्रसङ्गात्। न च नेदमनुमानं व्यभिचारि वेति स्वीकार्य एव तथाविधः प्रज्ञापको, यः स्वयमग्रहिलो विवेदिवान् ग्रहिलतां तच्चिह्नानि च, येनाख्यातमाश्रित्य भवतानुमीयते इयं। अन्यच्च-अनुमाने लिङ्गज्ञानस्य नियमो, न तत्प्रत्यक्षस्य। अन्यथाऽ-दृष्टसिंहस्य न स्यात्सिंहशब्दजन्या भीतिरेव सर्पदंशादिष्वप्यनुसन्धेय। लिङ्गज्ञान चात्रास्त्येव सर्वज्ञतासाधने। यत तदाचरणात्तदाचारात्त-दाकृतेश्च ज्ञातस्यैवभूतस्य परहितरतस्य परिहृतस्वजनादेर्देहनिर्ममस्य वाक्यं नाज्ञानपूर्वकम्। यो हि यत्र विषये हितरतादिविशेषणो न सो-ऽविदित्वा निरूपयति पदार्थ ज्ञानं चातीन्द्रियमेव। अनेवंविधेनातीन्द्रि-यार्थानां वेदनाभावात्। निरूपिताश्च जीवादयो धर्मादयो मोक्षादयश्च। यच्चोक्त'मावरणहान्ये'त्यादि। तदप्ययुक्तम्। यतो जीवस्य प्रदेशाष्टक तावत् सदैवानावृत तिष्ठति। न च तत्र देशतोऽप्यभूदावरण, येन तस्या-खिलावृत्या जडतापत्तिः स्यात्। तस्य ह्यकर्मत्वात् कर्मसङ्ग एव न-सिद्धप्रदेशवत्। एतदेव च शाश्वतं जीवत्व, अन्येष प्रदेशाना तु सर्वथा ज्ञानमात्रावृतिर्भवत्येव केषाञ्चित्सूक्ष्मैकेन्द्रियाऽपर्याप्तप्रथमसमयभा-विनामिति न भापयितव्यं भीतिमद्भिः। तथा चावरणहानेर्देशत उप-लम्भात् सर्वथा हानेरवश्य कार्योऽङ्गीकारः। त्यक्तबाल्येन आवरण-हान्यभावे च भवेद्भवतां सदैव बालत्वम्। यत्र सर्वथा तस्य हानिस्तत्रैव सर्वज्ञता। एव रागादीनां दोषाणामपि क्वाचित्क-कादा-चित्का हानिः स्वयमनुभूतैवान्यथागम्यगाम्येव भवान्भवेत्तथात्वे अलं वार्त्तया। न चेत् सा यत्र सर्वथा तत्र सर्वज्ञतैव, प्रतिबन्धकाभावस्य कार्यजनकत्वात्। अभव्यादिषु देशहानौ सत्यामपि पुनरुपचयान्न सर्वथा

हानिः। यत्र च देशादियोऽयतासद्भावाद् भवति सा, तत्र तत् केन निरुध्येतोद्भवत्। तत्सत्यमुक्त-'दोषावरणयोर्हानिर्निशेषाऽस्त्यतिशायनात्' इत्यादि। 'तारतम्ये' इत्याद्यपि यदुक्तं, तदपि न साधूनां वक्तुमप्यर्हम्, किमुत प्रतिपादयितुम्। यत उत्पतनादौ यद्यस्थास्यत् पूर्वोत्पतित ज्ञानवद् अभविष्यच्च ज्ञानवदक्रमवृद्धिक्रमभविष्यदेव परमः प्रकर्षः। न चैतद् द्वयम्। तत्कथमिव भवेद्भवदुदितम्। यद्वाऽस्तूत्पतनादावपि परम. प्रकर्षः। यतो यथा यथा हि लाघव कायस्य तथाऽभ्यासपाटवं च तथा तथोत्पातप्रकर्ष। लाघवप्रकर्षवन्तश्च यतः परमाणुद्व्यणुकाद्या.। अतोऽनुयान्ति चाधोलोकान्तादपि ते ऊर्ध्वं लोकान्तम् यावत्। लाघवमभ्यासपाटवं चाऽऽपाद्यमानमपि नैति परमप्रकर्षम्। यतोऽस्मदादीनां शरीरजाड्याविनाभावित्वाज्जीवनस्य। सर्वथा धातुक्षये मरणापत्तेरिति विभावनीय भावुकैः। अन्यच्च-यथा परिमाणं तारतम्येनोपलब्धमिति तद्विश्रान्तिश्च तथा ज्ञानस्यापि तारतम्योपलम्भादवश्य स्वीकार्या परमाणावाकाशे चापकृष्टस्योत्कृष्टस्य परिमाणविश्रामस्येव सूक्ष्मैकेन्द्रियापर्याप्ते केवलिनि चापकृष्टोत्कृष्टा च विश्रान्तिरिति। नन्वन्यथानुपपन्नत्वं हि हेतोर्लक्षणमभिमतं तत्रभवतां शास्त्रकृताम्। न चेदमत्रावरणहानि-तारतम्यहेत्वो सर्वथा हानिविश्रान्तियुगलेनेति चेत्। सम्यगपृच्छ, परमविचारितं रमणीयम्। यतो देशतो हान्युपलब्धौ तारतम्योपलब्धौ च निश्चीयते तावदिदं यदुत-नैतदवस्थितपरिमाणं द्वयं, किन्तु प्रयत्नाद्यानुकूल्येन वृद्धिमत्। प्रकर्षे च तयोर्भवत्येव प्रकर्षप्राप्तिरप्येतस्येति युक्तान्यथानुपपन्नता। अन्यच्च-ज्ञानमात्रमपि नह्यात्मव्यतिरिक्तम्, तथात्वे जडचेतनयोर्विभागाभावात्। सति जीवस्वभावत्वे नेयत्ताकारि किञ्चिन्न चेत् प्रतिबन्धकम्, क्षये च कर्मणः प्रतिबन्धकस्योत्पद्येतैव तदनन्तमिति स्यादेव ज्ञानानन्त्यम्। न चैवमुत्पतनम् शरीरस्य स्वभावो, येन ज्ञानवत्प्रकर्षमात्रमाप्नुयात्। वाच्यतापि स्वीकार्यैव सर्वत्र। यतो जीवादयः

पदार्थाः सर्वैरेव समाभिधानाः स्वीकृतास्ततो ज्ञानवत्प्रवर्त्तितास्ते। यदि तज्ज्ञानम्, तदा तस्यारूपित्वात् समस्तारूपिपदार्थज्ञानमपि भवन्न विरुध्यते। अरूपिपदार्थज्ञाने ऽन्द्रियादिर्वदियत्ताकारणाभावात्। सर्वेषामरूपिणां ज्ञाने चावश्यं तद्वाचका ये ये शब्दास्ते तेऽपि तैर्ज्ञाता एव भवन्ति। तद्ये ये वाच्यास्ते ते प्रत्यक्षाः कस्यचिदिति सुष्ठु प्रतिपादितम्। अन्यच्च-जीवादीनामनुमानमेयत्व स्वीक्रियते भवद्भिश्चेतनादिना तद्धर्मेण। स च कस्यचिद् भूतपूर्वश्चेत्प्रत्यक्षः, अनुमानं भवेत्तस्य तद्धर्मत्वेन प्रतोदनादन्यथा कल्पितः स्यात सम्बन्ध इति न सम्यक्सिद्धिस्तेषामिति यथार्थमेवोच्यते-यदनुमेया. कस्यचित्प्रत्यक्षा', यस्य च ते प्रत्यक्षविषया. सर्वे स एव सर्वज्ञतास्पदम्। ज्योतिषचिकित्सादिप्रतिपादका अपि तज्ज्ञानवन्त एव। यच्च भिन्नमतत्वं तत् स्व-कल्पनाकल्पितमिति न तत्प्रणेतृणां मालिन्याधायकम्। सर्वज्ञप्रतिपादितं ह्यवितथमेव। आगमोऽपि सर्व एव न सर्वज्ञतालयोदीरितो, यतो भिन्नवाच्यतया दोषमारुहेत्। किन्तु य एव हितोपदेशमुमुक्षुसत्साधु-परिग्रहपूर्वापरार्थाविरोधाद्यपरिमितगुणालयतयाऽशेषाभिवन्द्यगुणाकरप्रतिपादितः, स एवेति यत्किञ्चिज्ज्ञप्रणीतेनागमेन हिंसादिकलुषनृशंसदुर्बुद्धिपरिगृहीतेन न तस्य दुष्टतेति। न च पूर्वं साधितत्वात् सर्वज्ञस्यान्योन्याश्रयोऽपि सिद्धान्तात सर्वज्ञत्वाङ्गीकृतौ। उपमानमपि अप्रत्यक्षीकृतस्यापि सुराऽमृतसिंहादे सम्भवत्येवाप्तवाक्यादिनोपमानता। सत्यां च तस्यामध्यवसीयत एव सुरादेः सत्ता। तद्वदेवात्रापि तथा-प्रकारं ज्ञानिनमुद्वीक्ष्य सर्वज्ञेनोपमानं दीयमानं दृष्ट्वा को न कक्षी-कुर्यात् सर्वज्ञतावत सद्भावम्? अर्थापत्त्यापि सिद्ध्यत्येव तन्महानुभावतास्पदम्, यतो न तदन्तरेणात्मादिपदार्थज्ञानं तत्प्ररूपणं च सम्भवति। यच्चाऽत्रोक्त मपौरुषेयादागमादात्मादिबोध' इति। तन्निचितजडिमावष्टब्धान्त करणविलसितमेव। यतो न तावदपौरुषेयो वचनलेशोऽपि सम्भवति, आसतामागमा विस्तृतवचनरूपाः। उच्यते

इति हि वचनमुच्यते विज्ञैः । यदि च नैव वक्ता, कुतस्तेषां सम्भवः । विश्वासश्चाप्ताधीनो वचनेषु । न चेद्वक्ता को विश्वास-लेशोऽपि तत्र तत्त्वेक्षिणाम् । अन्यच्च-यद्यपौरुषेयता वेदस्य कथमेवोद्भव एषाम् । नोद्भूता नित्याश्चेत्, अहो ! विचारचातुरीचतुराणां ताल्वोष्ठादि व्यङ्ग्यशब्दसमूहमयानामागमानां नित्यत्वाभिमतिः । ननु कल्पादौ कथमायातो ?, न कल्पस्तदादिर्वा, चिरं जीव स्वकपोलकल्पितत्वं स्वीकृतं भवद्भिरेव स्मृतिपुराणानां । परं 'सूर्याचन्द्रमसौ धाते'-त्यादीनां ऋगवेदादीनां 'अनेन जीवेनात्मना असदेवेदमग्र आसीत् ब्रह्मैवेदमग्र आसीदि'त्यादिश्रुतीनां प्रामाण्यायापि दत्तवान् जला-ञ्जलिर्देवानां प्रिय । स्वीक्रियते कल्पादिरागमश्चैषामागमानामृष्या-दिभ्यश्चेत्तदापि वरम् । ननु तैरतीतयुगीन ज्ञातं न वा । ज्ञात चेत्, स एव सर्वज्ञताभाववाद विमृशन्तु विमर्शशालिन । यथा चात्र तैः शब्दतः कण्ठत. उक्त ,एवमग्रेपि सर्वदोद्भवस्तस्य कण्ठत. शब्दतो भवन् केनापलप्येतापलापभीरुभि । श्रूयन्ते मन्त्रशाखादीनां प्रत्येकं प्रत्येकं ऋषयोऽपि कर्त्तार इति नापौरुषेयता । यदि च प्रयोजन भवतां भवेदेव क एतावतीनां हिंसानां स्वीकर्त्ता मूलपुरुष-स्यादिति चरैवापौरुषेयता, तदा तत्परित्याग एवोचित , नत्वेनमलीक-वादकल्पनाजालम् । न च वेदेष्वस्ति किञ्चिदपि भावुकमात्मश्रेय.-कारकं धर्मस्वरूपादि, केवलमजादिवधोपस्कररूपत्वादेव तेषाम्, अना-चारनिदानं च वेदेभ्योऽपर किञ्चिज्जगत्यपि न । यत्र महिषी-वाजिनो. समागम स्वतत्रमुज्झित्वा कुलीनतामपि वर्ण्यते, पापठ्यते च सीधुपानादिविधिश्चेत्यलं पापकथया । अभावविपयतापि सर्व-ज्ञस्य कथमिव भवेत् । यतः पूर्व सविस्तरं दर्शितैव सर्वज्ञता-सम्पत्ति-सङ्गतिरिति यथार्थमुक्तं-सकलार्थात्म [नाम्] । तेषां किमित्याह 'सतत-प्रतिभासन'मिति । सततमविच्छेदेन, न शेषज्ञानानामिवाऽस्योप-योगसापेक्षता । छाद्मस्थिकज्ञानानामत एवोपयोगतोऽन्तमुहूर्त्तं स्थितिः

न चैवमस्य, प्रतिसमय सकलार्थात्मग्रहणात् । ननु च द्वितीयसमये

'नाणमि दंसणंमि अ, एत्तो एगयरमि उवउत्ता । सव्वस्स केवलिस्स वि जुगव दो णत्थि उवओग ॥ त्तिपारमर्षवचनात् केवलदर्शनोपयोगेन कथमिव सततताऽस्येति चेत् । कः किमाह—यतो न तावदभिमतमभियुक्तानामेतद्यदुत- केवलज्ञानदर्शनयोः समयभेदेनोपयोगभेद । तथात्वे तु केवलिनामपि समयान्तरेणासर्वज्ञत्वासर्वदर्शित्वाऽऽपत्तेः । यदाहुः पूज्यपादा सप्रपञ्चं—

सतमि केवले दंसणमि नाणस्स संभगे नत्थि ।
केवलनाणंमि अ दंसणस्स तम्हा सणिहणाइ ॥ १ ॥

दसणनाणावरणक्खए समाणमि कस्स पुव्वयरं ।
होज्ज समं उव्वाओ हदि दुवे नत्थि उवओगा ॥ २ ॥

जइ सव्वं सायारं जाणइ सव्वसमएण सव्वणू ।
जुज्जइ सयावि एवं अहवा सव्वं न जाणाइ ॥ ३ ॥

परिसुद्धं सागार अवित्रत्तं दंसणं अणागारं ।
न य खीणावरणिज्जे जुज्जइ सविअत्तमविअत्तं ॥ ४ ॥

अद्दिट्ठं अन्नाय च केवली एव भासइ सयावि ।
एगसमएण हदि वयणवियप्पो न संभवइ ॥ ५ ॥

अन्नाय पासन्तो अद्दिट्ठं च अरहा वियाणंतो ।
किं जाणइ किं पासइ कह सव्वणुत्ति वा होइ ॥ ६ ॥ इत्यादि

'नाणमि' इत्यादेः 'पभू ण इम च ण रयणप्पभ' इत्यादिव्याख्याप्रज्ञप्तिवाच्यस्य समाधान सूत्रितमेव ।

परवत्तव्वयपक्खा अविसिट्ठा तेसु तेसु सुत्तेसु। अत्थगईय उ तेसिं विभजणं जाणओ कुणइ॥ अत एव च व्याख्यान्ति सूरिपादानुसारिणः- 'संभिण्णं पासंतो' तथा 'संभिण्णनाणदंसणधरा' इत्यादौ संभिन्न-मीलितं सामान्यविशेषोभयरूपं पश्यन् मीलितज्ञानदर्शनधारका इत्यादि। अन्ये तु जीवस्वाभाव्यादेवोपयोगपार्थक्यात् समयान्तरितत्वेऽपि मति-ज्ञानादेरुपयोगत. सान्तरत्वेऽपि षट्षष्टि सागरोपमाणा यथा स्थिति-स्तथाऽत्रापि साद्यनन्तत्वमपि न विरोधमधिरोहति। तत्र क्षयोपशम-वदत्र क्षयावस्थानादिति व्याख्यान्त्युपयोगापेक्षया सान्तरत्वेपि तदाव-रणक्षयापेक्षया साद्यनन्तते ति युक्ता सततताऽस्येति। सतत किमित्याह- 'प्रतिभासन'मिति। प्रतीति विशिष्ट, विशिष्टता च याथार्थ्येन, भासन-मवगम प्रतिभासनम्, प्रतिपूर्वकस्यैव वा भासेरवगमार्थता। अत्रेदम् सतत्त्वं-सकलावरणमुक्तात्म केवलम् यत्प्रकाशते तत्प्रत्य-क्षमेव भवति। तदपि सकलार्थात्म सततप्रतिभासनात् सकलं, नत्वव-ध्यादिवद्विकलमित्वर वेति। अन्ये तु व्याख्यान्ति-यद्यस्माद्धे तो केवलं सकलावरणमुक्तात्म, तस्मात् प्रत्यक्ष, सकलार्थात्म सततप्रतिभासन यथा स्यात्तथा प्रकाशते इति। अपरे तु व्याचख्युर्यत्पूर्वं 'अपरोक्षतये'-त्यादि परोक्षोपयोगितयोक्तं, न लक्षणाभिप्रायेण। यद्वा-उक्तमपि लक्षणाभिप्रायेण साव्यवहारिकप्रत्यक्षापेक्षयैव तल्लक्षणं, न तु पार-मार्थिकापेक्षयेति। साम्प्रत व्यावहारिक-प्रत्यक्षानुमानादिपरोक्ष-व्याख्यानन्तर पारमार्थिक प्रत्यक्ष लक्षयन्त सकललक्षणे कृते विकलं बुद्धिगम्य भविष्यत्यभिप्रेत्याहुर्यत्केवलं सकलावरणमुक्तात्म प्रकाशते तत् सकलार्थात्मसततप्रतिभासन प्रत्यक्ष सकलप्रत्यक्षमित्यर्थ.। तथाच यदसकलावरणमुक्तात्म प्रकाशते, तद्विकलार्थात्मप्रतिभासनम् विकलं प्रत्यक्षमिति। विग्रहश्चात्र सकलैरावरणैर्मुक्त आत्मा जीवो यस्मिन्निति समारचनीय इति। गूढतमश्चैषामभिप्रायः॥ २७॥

एवं सप्रपञ्चं प्रमाण निरूप्य यद्वा फलापेक्षया सकलस्य पृथ-

कफलत्वात्तन्निरूप्य फलव्याख्यानायोदाहृतवन्त.—

प्रमाणस्य फलं साक्षा-दज्ञानविनिवर्त्तनम् ।
केवलस्य सुखोपेक्षे, शेषस्याऽऽदानहानधीः ॥२८॥

तत्र प्रमाणस्य-प्राङ्निरूपितस्वरूपस्य, फल-कार्यं जन्यम् वा, साक्षात्-आनन्तर्येण, अज्ञानस्याबोधस्य संशयादेः कुत्सितज्ञानस्य वा विनिवर्तनम्-विशेषेण निवृत्तिः । प्राक् च पदार्थमात्रविषयक-मभूज्ज्ञानं संशयादौ, अधुना तु धर्मविषयकोऽपि निर्णयो जात इति निवृत्तमज्ञानेन तद्विषयकेण । सर्वं हि ज्ञानं स्वविषयत उद्भवत् प्रथममेव तावन्नाशयति स्वाश्रयस्य तद्विषयकमज्ञानम् । छायातपयोरिव विरोधात् ज्ञानाज्ञानयो. । तत एव चैनभ्यानन्तरं फलमेतदामनन्ति मनीषिणः । न च वाच्यं कथमिवाज्ञानस्य नाशमृतेऽवाप्नुयाज्ज्ञान-मुदयम् । नहि दृश्यतेऽन्धतमसे सूर्योदयः पश्चाच्च तस्य तेन नाश इति । यत· प्रथम नश्यदज्ञानं कुतो नश्येत् ? स्वयमेव चेत्,अहेतुकतापत्ति· । न चास्ति हेतुरन्यस्तस्य विना ज्ञान विनाशे । अत एव च जातेऽपि ज्ञाने-ऽनभ्यासदशायां संशयादय उत्पद्यन्ते । यदि च पूर्वमेवानङ्क्ष्यदज्ञानं का वार्त्ता संशयादेः । उच्यतेऽपि च विद्वद्भिर्जाते ज्ञाने निर्णीते मे संशयो नष्टः, अवसेयम् चेदमतोऽपि-यद्यथा यथा ज्ञानोद्भवस्तथा तथा संशया-देरल्पता अनुभूयते आबालगोपालेन । ननु चाज्ञानमिति ज्ञानाभावोऽ-भावश्च नर्त्ते भावमवाप्नोति नाशम् । संशयादिका अप्यंशतो ज्ञानशून्या एव । ननु ज्ञानमित्यात्मधर्मोऽज्ञानं चौदयिको भावः, क्षयोपशमादिना तदावरणनाशे च ज्ञानोत्पादोऽज्ञाननाशश्च । तथा चावरणनाशजन्यो ज्ञानोत्पादोऽज्ञाननाशश्चेति नानयोर्हेतुहेतुमद्भावो युक्तः । नहि कारण-भूतावरणनाशे जाते क्षणमप्यवतिष्ठतेऽज्ञानं यन्नाश्येत तदनन्तरो-त्पन्नेन ज्ञानेन । न तु लब्धे केवले क्षणं छाद्मस्थिकं ज्ञानमज्ञानं वेति चेत् सत्यं, एतद्धि अनन्यथासिद्धपूर्ववृत्तित्वरूपकारणज्ञानाधी-

नोत्पत्तिकं, पर प्रदीपप्रकाशयो प्रभापत्युदयान्धतमसनाशयोरिव समकालमप्यस्त्येव द्वयोः कारणकार्यभाव । न चानवाप्ते नाशमन्धङ्करणान्धकारततिरवाप्नोति द्वादशात्मन्युदयम् । तथाऽत्रापि ज्ञानावरणनाशजन्यत्वेऽपि द्वयोर्नह्यज्ञानतमो नश्यति ज्ञानदिवाकरोदयमृते । नचैवं केवलकेवलद्विकलाभे छाद्मस्थिकज्ञानस्याज्ञानस्यापि क्षणमवस्थानसम्भव इति । आवरणनाशे वा सद्य उत्पद्यते ज्ञानमात्मधर्मत्वात्तस्य, उत्पन्ने च तस्मिन्नश्यतीतरत् तत्काल तेनेति ज्ञानोत्पादाज्ञाननाशयोर्न कारणकार्यभावविरोध । द्वादशगुणस्थानान्त्यसमये च ज्ञानदर्शनावरणे क्षपयित्वाऽवाप्नोति त्रयोदशगुणालयादावेव केवलद्विकं नश्यति च तत्समकालं प्रचण्डचण्डभानूदयसमकाल तमस्ततिवदज्ञानतमोवृन्दमिति किं चर्वितचर्वणेनेति । अनेन य आहुः-प्रमितिकरणं प्रमाणमिति सूत्रेण प्रमाणस्य ज्ञानरूपां प्रमितिं फलतया, ते निरस्ताः । तन्मते हि प्रमाणस्याज्ञानरूपत्वापत्तेरज्ञानरूपात् प्रमाणाच्च कथङ्कारमापद्येत चाज्ञाननिवृत्ति । चर्चित च प्रागप्येतत्प्रमाणलक्षणावसरेऽपि । अज्ञाननिवृत्तिश्चावाप्तकेवलस्य शाश्वतिक्येव । क्षायोपशमिकज्ञानवतामपि यावत्स्थिति साऽस्त्येव । न च वाच्य साऽज्ञाननिवृत्तिः किं प्रागभावरूपा ध्वसाऽन्योन्यात्यन्ताभावान्यतमरूपा वा ? यत आद्यरूपत्वे, प्रतिक्षणं निवृत्तिवत्तत्प्राक् क्षणे आसद्येत एव सति तत्सत्ता, स्याच्च तन्नाशानन्तर ज्ञानोत्पादः । ध्वसरूपत्वे तु तस्या उत्तरपरिणामो वाच्य, घटध्वसस्य कपालयुग्मवत् । न वाऽऽद्यक्षणावशिष्टं ज्ञानं फलवत्तत्राज्ञानाभावात्तन्निवृत्त्यभावात् । न च ज्ञानाभावरूपाज्ञानस्य युक्तो ध्वस । अन्योन्याभावत्व चेत् नाभावरूपा सा, अत्यन्ताऽभावत्वे न पुनरुपपत्तिः फलत्वस्य, ज्ञानाभावाभावरूपत्वाज्ज्ञानस्येति । यतोऽज्ञानं तावन्न ज्ञानाभावरूपम्, किन्तु ज्ञानावरणोदयोत्पन्न आत्मपरिणामोऽशुभः, तथा चाज्ञाननिवृत्तिरित्यस्याज्ञानध्वस इत्येवार्थ उत्तरपरिणामश्च य एव ज्ञानान्वित शुद्धः

आत्मपरिणामः। घटोऽभवन्मृत्तिकायां तद्वृत्ति च कपालयुगलं यथा तथैवात्र ज्ञानाज्ञानयोरात्मपरिणामे समावेशात्। यथा यावत्कपालं घट-ध्वसवत्ता प्रतीयते, एवमत्रापि यावज्ज्ञानमज्ञाननिवृत्तिः प्रतीयते, न कोपि दोषावकाश.। शेषास्त्वनभ्युपगमेनैव निरस्ता। एवं साक्षात्फलमभिधाय प्रमाणस्य सामान्येनाधुना विभागेन पारम्पर्येण फलमाहुः—'केवलस्ये'-त्यादि। केवलस्य प्राङ्निर्णीतस्वरूपस्य फलमित्यत्रापि सम्बन्धनीयम् अनुवृत्त्या दीपोद्योतन्यायेन वा। यतो दीपः प्रज्वालित उद्योतते आलयमखिलमनावृतम्, तथाऽत्रापि पूर्वमुक्तं फलपदमत्र समग्रश्लोके यथोपयोगमायात्युपयोगमिति। किमित्याह-'सुखोपेक्षे' इति। केवलेन वेदसोपलभ्यार्थानात्मस्वरूपत्वात्तस्यात्मरमणोऽवाप्नोत्येव स्वाभाविकं सुखम्। अत एव च सिद्धानामपि न सुखसद्भावे संशयकणिका, तेषामप्येतज्ज्ञानरूपत्वात् ज्ञानानन्त्येनैवानन्तसुखसम्पत्तेर्निर्विवाद-त्वात्। दृश्यते चाप्यत्तमवाप्तबोधः सामान्यतोऽप्यपूर्वमाह्लादास्थानं सौभाग्यवांश्च। यत उच्यते एतद् 'कलानां ग्रहणादेव सौभाग्यमुप-जायते' इत्यादि। न तेषामौत्सुक्यमिति त्वन्यदेव। तस्यौत्सुक्योद्भवे विवादात्। अन्यैस्तु किमप्यालम्ब्य कारण दूरपरम्परादि नैतद् बहुमत। यतस्तैर्हि व्यवस्थाप्यते इदम् यदुत—साक्षात्फलजन्यं हि परम्पराफलम् स्यान्न चाज्ञाननिवृत्तिजन्यं सुखम्, किन्तु तस्याखिललोकालोकजन्य-मन्यथा यावत्प्रमाणानामज्ञाननिवृत्तिव्याप्यत्वात् स्यादेव सुखम् सम-ग्राणां परम्पराफलम्, न तु केवलस्य केवलस्येति। तदुक्तं केवलज्ञानस्य तावत्फलमौदासीन्यमित्यादि। सूरिपादैस्तु शेषज्ञानाना यथोपादानादि-बुद्धयः फलत्वेनोपादीयन्ते उपादेयादिचर्णस्ताश्च ज्ञानजन्याः, परम् प्रथम तावदज्ञाननिवृत्तेर्भावात् तस्याः साक्षात्फलत्वम्, शेषाणां पश्चा-द्भावात् परम्पराफलत्वम् स्वीक्रियते सुनिर्णीतस्वीकारै.। तथात्राप्य-वेक्षणीयमेवैतत्फलमित्यभिप्रेत्योक्तं सुखम् फलतया, शेषज्ञानानां तूपादानादिबुद्ध्युत्पादेन तदुद्भव इति न तद्विवक्षा। 'कलानां

ग्रहणादि'त्यादि तु तस्योपादानोपादेयादिजन्यहर्षज्ञापनपरम्, न तु ज्ञानमात्रोद्भवफलज्ञापनार्थौत्सुक्यप्रभवो वा स हर्ष इत्यलं विस्तरेण। न केवलम् सुखम्, किन्त्वन्यदपि उपेक्षारूपम्। केवलज्ञानावाप्त-विमुक्तानां हि न किञ्चिदौत्सुक्याभावादुपादेयम्, ज्ञानेनावलोकिता-खिलजगद्यथार्थस्वभावान्निरुपाधित्वाच्च हेयमस्ति। उपादेयस्यादित एवोपादत्तत्वाद्धेयस्य त्यक्तत्वाच्चेति युक्तमुक्तमुपेक्षेति। न च वाच्य-मवाप्तकेवलो भवस्थोऽपि भवत्येव पुरुषोत्तम' तस्याधुनापि हेयो भवो घातीनि भवोपग्राहीणि चत्वार्यदृष्टानि वा हेयानीति कथं तस्य न हेयादि?। भवस्वरूपावगमेनार्वागेवावगतमेतस्य, यदुत-यास्यत्येवायमेव-मेव क्षयमिति न तस्य तद्गता जिहासा। मोक्षस्योपादेयता त्वर्वागपि परमवैराग्याणां नाभूत् केवलात्, 'मोक्षे भवे च सर्वत्र निःस्पृहो मुनिसत्तम' इतिवचनात्। का वार्त्ता तदुत्पत्तेरनन्तरम् तु। यतः काकनाशम् नष्टस्तेषा रागद्वेषात्मको मोहः। न च विना तेनोपादा-नादिबुद्धिसम्भव इति। अथ छद्मस्थानां किं प्रमाणफलं पारम्पर्येणे-त्याह- शेषस्यादानहानधी'रिति। शेषस्य पूर्वोक्तात् सकलप्रत्यक्षरूपात् केवलात् परस्य विकलप्रत्यक्षव्यावहारिकप्रत्यक्षानुमानशाब्दादि परो-क्षरूपप्रमाणसमुदायस्य, जातावेकवचनम्। यद्वा-एकमेवोपयोगापेक्षयै-कस्मिन्काले इति 'शेषस्ये'ति प्रोचुरेकवचनम्। नहि छाद्मस्थिकानि ज्ञानानि युगपद्भवन्त्युपयोगतः। केवलवतां त्वेकमेव ज्ञानं, तत्र तेषामपि युगपदनेकज्ञानसम्भव। किमित्याहु'रादानहानधी'रिति। आदीयते इत्यादानम्, हीयत इति च हानम् उभयत्रापि धात्वर्थनिर्देश-रूपे भावे 'अनट् क्लीबे भाव' इत्यनट्। तयोरादानहानयोर्धीर्बुद्धिरादा-नहानधी'। केवलादपरस्य परम्पराफलमिति सण्टङ्कः। तत्र विकलेन प्रत्यक्षेण तावदवधिमनःपर्यायरूपेणालोक्य रूपिद्रव्याणि मनोद्रव्याणि च यथार्हाणि हृषीकगोचरातीतानि स्वेष्टमुपादातुमनिष्टं हातुं च प्रवर्त्त-न्ते एव तद्वन्तः। नहि तद्वन्तो मुक्ता रागद्वेषाभ्यां सर्वथा, यत्र तेषा-

मादानहानधीर्न भवेत् । किन्त्वाद्येषु देवानां विशेषेण तद्भावस्तेषां परिग्रहसंज्ञाबहुलत्वात् विषयगवेषणातत्परत्वान्नासम्भविनी। अन्तानां त्वप्रमत्तत्वेपि विद्यत एव, मोक्षसाधनानां वैराग्यादीनामुपादित्सा रागादीनां कर्मबन्धकारणानां च जिहासेति न तेषां तत्सम्भवे दोष-लेशोऽपि । मतिज्ञानभेदभूतानां स्पार्शनादीनां स्मृत्यादीनां श्रुतरूप-स्यागमस्य फलं स्पष्टमेव वेविद्यते विद्वद्भिरुपादानहानधीलक्षणम् । ननु चोपादानहानयोग्यार्थव दस्त्युपेक्षणीयोऽप्यर्थ स्थाणवादिस्तद्बुद्धिश्च भवत्येवेक्षकाणां, तत् किमिति सा नोक्ता फलतयेति चेत् । अत्र केचिदाहुः-यदुपलक्षणेन सापि ग्राह्यैवेति । अन्ये त्वाहुः-यथा मैत्र्या विषयीकृतेषु प्रमोदकारुण्यभावनयोः ये नागच्छन्ति तेषामुपरि माध्य-स्थ्यभावनोचिता भावयितुम्, तथात्रापि प्रमाणविषयीकृतोऽर्थस्ततप्रथम-तया छद्मस्थेनोपादेयतया हेयतया वा गवेष्यते, न चेत्तद्विषयतयाऽसाव-वाप्यते उपेक्षाविषयीक्रियते इति प्रथममुपादानहानयोः फलत्वम् । केवलिनस्तु तदभावादुपेक्षैवेति । अपरे तूदाहरन्ति-यत्सुखोपेक्षयोरनु-वृत्तिर्वर्त्तते । तेन शेषस्य सुखोपेक्षादानहानधियः फलम् । सूरिपादैस्तु 'शेषस्यादानहानधी'रित्यनेन प्रतिपादितमेतद् यदुत-न छद्मस्थानामस्त्यु-पेक्ष्यम्, उपादेयेतरस्य हेयत्वनियमात् । उपेक्षणीयमप्यनुपादेयत्वाद् हेयमेव । केवलिनस्तु नोपादित्सेति न तद्भिन्नत्वेन द्वेषविकलत्वाद् हेयतेत्युपेक्षैव तथाविधा फलभूतेति । यथासत्यमालोचनीयम् वैतदा-लोचनालोचनैः । उपादानबुद्ध्यादीनां कथञ्चित्प्रमातृतादात्म्यात् प्रमाणात् कथञ्चिदभेदः, प्रमाणोपादानादिबुद्ध्योः कारणकार्यभावाच्च कथञ्चिद्भेद इत्याद्यप्यवधेयमत्र धीधनैः ।

एवं प्रमाणे आख्यायाधुना 'नाप्रमेयं प्रमाण'मित्यवश्यं भाव्यं प्रमेयेणेति तत्स्वरूपमाहुः—

अनेकान्तात्मकं वस्तु, गोचरः सर्वसंविदाम् ।
एकदेशविशिष्टोऽर्थो, नयस्य विषयो मतः ॥ २९ ॥

तत्र 'अमद्रमहमे' त्यादिर्दण्डकधातुर्गत्यर्थोऽम्यते-गम्यते इति 'द-म्यमितमिताग्रापू०' इत्यादिनौणादिके तप्रत्यये अन्तो-धर्मः सत्त्वासत्त्वा-दिर्वस्तुस्वभावः, अनेका अन्ताः सत्त्वासत्त्व-नित्यानित्यत्व-वाच्या-वाच्यत्वाद्या अनेकान्तास्ते आत्मा स्वरूपं यस्य स 'शेषाद्वे'ति कचि अनेकान्तात्मकम् । वस्तुस्वभावाविर्भावकमेतत्, न व्यवच्छेदकम्, अनेवम्भूतस्य वस्तुन एवाभावात् । 'उत्पादव्ययध्रौव्ययुक्तं सदि'ति नियमादनाविर्भूतस्वभावस्य भावस्य स्वभावाविर्भावनाय विशेषणस्य सम्मतत्वाद् आपो द्रवाः परमाणुरप्रदेश' इत्यादिवत् । यद्वा-प्रमेयमाचि-चक्षुः प्रथम प्रमेयभूतं वस्त्वेव प्रथमपादेन लक्षयति-यदुतानेकान्ता-त्मकम् वस्तु । अर्थादाख्यात्यन्यथाभूतस्यावस्तुत्वम् । ननु च कथं परस्परविरुद्धानां सत्त्वनित्यत्ववाच्यत्वानां सेतराणामेकत्र समायोगः स्यात् ? तदसम्भवे चासम्भव्येवैतल्लक्षणमिति चेत् । अनुभव-चक्षुष्कानां नातथाभूतं वस्तु त्रिजगत्यपि दृष्टिपथमायाति । निर्गत-दृष्टीनां किं कथ्यते ? यदि नायाति सदपि दृष्टिपथं तदा । यतो विचार्यतां तावत्-विवक्षितो घटो यदि मार्त्तिकत्वेन पाटलिपुत्रोत्पत्ति-कत्वेन शैशिरत्वेन कृष्णादिगुणवत्त्वेन स्वपर्यायापेक्षया सन् तदा परैः राजत-माथुरक-वासन्तिक-पीतादिगुणवत्त्वलक्षणा परपर्यायैरसन्नेव । अन्यथा ततो व्यावृत्त्यभावात् कथमिव स्वरूपं ज्ञापयेदसाववविक्त-स्वरूपः । न च पृथगस्त्यभावो यस्तत्रागत्य तत्प्रतीतिं कारयति । तस्य सर्वथा भिन्नत्वे भवन्मतेनैव तस्य न स्वरूपसम्बन्धेन तद्वत्ता भवेत् । अभाववत्तद्वतो स्वरूपः सम्बन्ध इत्यभिधानात् । द्वयोः स्वरूपस्य सम्बन्धत्वेऽभावस्य पृथगसत्त्वाद्भावरूप एवाभाव इति पर्यवस्यति । स्वीक्रियते न चेत् तस्य स्वरूपेण पररूपासत्त्व स्पष्टः स पररूपः, भावा-भावयोः परस्पराविनाभावित्वात् । न चाधिकरणादन्यत् किमप्यभावा-ख्यमवलोक्यतेऽधिकरणमात्रज्ञानेनेतराभावस्य वेविद्यमानत्वात् । न चाभावस्याधिकरणात्मकत्वे स्पर्शनेनाधिकरणस्य ज्ञाने तद्वृत्तिरस-

स्याभावज्ज्ञानायान्येन्द्रियव्यापारो न युज्यतेति वाच्यम्। यतस्तत्स्पर्शस्यैव स्पर्शनेनावबोधात्। समग्रगुणयुक्तावबोधस्त्वखिलैस्तद्गुणैरवलोकितैरेव। अन्यथा तद्वृत्तिरसस्याप्यप्रत्यक्षात् किमिति सोऽपि न तत्र भवति। न चैवं सति सन्नेवासन्, असन्नेव च सन्नापद्यते इति-महदनिष्टम्। स्वापेक्षया तस्य सत्त्वे परापेक्षया चासत्त्वेऽङ्गीक्रियमाणे नांशतोऽपि स्याद्वादनिपुणानामनिष्टसम्भव। स्याच्च तेषामेवानवबुद्धस्याद्वादसतत्त्वानां शङ्करप्रभृतीनां स्वपित्रपेक्षितवधूशङ्कावाच्यस्वजननीमपि जगद्वधूत्वेनाङ्गीक्रियमाणानां महदनिष्टं स्ववचसैव। अस्माकं तु तत्पित्रपेक्षया तस्या वधूत्वेऽपि शङ्कराद्यपेक्षया तस्यां जननीत्वाद्यनेकविरुद्धधर्माङ्गीकरणान्न तथाप्रसङ्ग। यत्तु तैस्तेषा तीर्थङ्करोऽप्यतीर्थङ्कर इत्यादि स्याद्वादापलापे प्रलपितम्, तदपि स्ववधायोद्गीर्णशस्त्रम्। यत. स्वयमेव पूर्वमद्वैतदर्शनावसरे कथञ्चिन्निश्चयापेक्षयैकत्वं व्यवहारापेक्षया चानेकत्वमात्मन स्वीकृतम् तदेतेन स्ववचसैव हतम्। अस्माकं तु तस्य भावाद्यपेक्षया तीर्थङ्करत्वेऽपि केवलनामाद्यपेक्षयाऽतीर्थकरत्वमभिमतमेव। अनुपकृतपरहितरताखिलार्थवेदननिपुणस्यासर्वज्ञताप्येवमेव तेषां प्रसाध्यमाना न दोषावहा। किन्तु मण्डनमिश्रमोहनाकृत—मोहनविषयक – प्रश्नोत्तरसामर्थ्यहेतुकाश्रितनृपललनानां तेषामेव सर्वज्ञत्व दोषपोषक विशेषेण। अभिमतशिवपुरी–वाराणसीनिवासिश्वपचवार्त्ता तु यद्यपि कथञ्चित् सर्वज्ञत्वाविरोधितया समाधीयेत सांशयिकत्वमपि तेषा तत्रैव युक्त सर्वज्ञख्यातिमतां महिधीसमागमे न तु ब्रह्माद्वैताद्वैतनिर्णीतिवत्स्वापेक्षया सत्त्वे परापेक्षया चासत्त्वे निर्णीते। उक्त चैतत्-'सर्वे सन्ति स्वरूपेण पररूपेण नैव च' त्यादिनाभियुक्ततरै.। अन्यच्च-स्याद्वादानङ्गीकारे 'पीयमानं मधु मदयती'त्यत्र परस्परविरुद्धकर्त्तृकर्म-कारकसमावेशोऽपि ? कथं भवतां युक्ति-सङ्गतो भवेत् ? कथं चैकस्यैव ह्रस्व-दीर्घ प्लुतलक्षणपरस्परविरुद्धभेदभिन्नस्यावर्णोनैकेन वाच्यत्व ? कथं वा पचतिमाह-गवित्ययमाहे-

स्यादावनुक्तार्थे नामसङ्ज्ञा तदभावश्च ? । यच्चोन्मत्तप्रायैः प्रलिपितम्-यदनेकान्तेऽनेकान्तोऽस्ति न वा, उभयथाप्येकान्ताङ्गीकारध्रौव्यात् । तदपि गूढव्यथाव्याकुलितान्तःकरणविलसितम् । यतो नैवार्हति योग्यतां तावदयं प्रश्नः । अन्यथा व्याप्तेर्व्याप्तिर्ज्ञाता न वेत्येवं पर्यालोचने धावमानाऽनवस्थावल्लरी न कथमपि लभेताऽऽस्थाम् । अस्माकं तु स्वापेक्षया सत्त्वस्य पराऽपेक्षया चासत्त्वस्य निर्णयनान्न भवदुक्तदोषसंसर्गोपि । ननु प्रतिज्ञाविरोध एकान्ताभ्युपगमादितिचेत् । न, निर्णयस्यापि तस्यानेकान्तगर्भितत्वादेव । तदुक्तं पूज्यपादैः —

'भयणा वि हु भइयव्वा जह भयणा भयइ सव्वदव्वाइं ।
एवं भयणानियमो अ होइ समयाविरोहेण ॥१॥

पारमर्षेपि-'इमा रयणप्पभापुढवी सिअ दव्वट्ठयाए सासया सिय पज्जवट्ठयाए असासय' त्तिवचनासूत्रेनानुमतमेव । यतोऽत्र द्रव्यार्थनयेन नित्यता पर्यायार्थनयेन चानित्यतापि स्यान्नकाराङ्कितैवाभिमता । युक्तं चैवमेव । नह्यस्ति द्रव्यपर्याययोः सर्वथा भिन्नरूपता, येन सर्वथा शाश्वतत्वं तद्वितरद्वा भवेत् । किन्त्वर्पितानर्पितविवक्षया भिन्नता कथञ्चिदेवेति युक्तं स्यात्काराङ्कितम् । निपीताविरोधिवचनपीयूषाणां च स्यादेवैवविधो वाक्प्रसरः —

'स्यान्नाशि नित्यं सदृशं विरूपं, वाच्यं न वाच्यं सदसत्तदेव ।
विपश्चितां नाथ ! निपीततत्त्वसुधोद्गतोद्गारपरम्परेयं' ॥१॥

मित्यादि । उक्तयुक्त्यैव नित्यानित्यवाच्यावाच्यसामान्यविशेषोभयात्मकत्वमपि नेयं नीतिविद्भिः । यतो नहि किञ्चिदपि घटादिकं द्रव्यतया नश्यति, निर्द्रव्यं चोत्पद्यते कपालादि । अत एव च पठ्यते-

नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥१॥

प्रत्यभिज्ञायते चांशतो विनष्टमपि पटादिकम्। न च नवोत्पन्ने स्वस्वत्वमस्ति। तथा चासत्यालापा एवैकान्तनित्यवादविचक्षणाः समापद्येरन्। स्याच्च तेषामेकान्तैकान्तप्रविष्टानाम् अदर्शनीयमुखता अतिकुत्सितदोषास्पदानाम्। यतो वर्णिता वर्णिकामात्रमन्तर्वाणिविशारदैः—

सत्त्वस्यैकान्तनित्यत्वे कृतनाशाकृतागमौ।
स्यातामेकान्तनाशेऽपि कृतनाशाकृतागमौ ॥१॥

आत्मन्येकान्तनित्ये स्यान्न भोगः सुखदुःखयोः।
एकान्तानित्यरूपेऽपि न भोगः सुखदुःखयोः ॥२॥

क्रमाक्रमाभ्यां नित्यानां युज्यतेऽर्थक्रिया नहि।
एकान्तक्षणिकत्वेऽपि युज्यतेऽर्थक्रिया नहि ॥३॥ [वीत०]

तथा 'नैकान्तवादे सुखदुःखभोगौ, न पुण्यपापे न च बन्धमोक्षौ'। तथा 'य एव दोषाः किल नित्यवादे, विनाशवादेऽपि समास्त एवे'ति। उक्तं च पूज्यपादैरप्यन्यत्र—

सुहदुक्खसंपओगो न जुज्जइ निच्चवायपक्खंमि।
एगंतुच्छेअंमि य सुहदुक्खवियप्पणमजुत्तं ॥१॥

कम्मं जोगनिमित्तं बज्झइ बंधट्ठिई कसायवसा।
अपरिणउच्छिन्नेसु अ बंधट्ठिइकारणं नत्थि ॥२॥

बंधंमि अपूरंते संसारभओह दंसणं मोज्झं।
बंधं व विणा मुक्खसुहपत्थणा नत्थि मोक्खो य ॥३॥ [सन्मति०]

वाच्यावाच्योभयात्मकतापि पदार्थप्रचयस्य नियमितधर्मवाचकत्वाच्छब्दानामवशेषधर्मानुदीरणात् स्पष्टैव। यद्वा नहि यावदितरपदार्थगतधर्मव्यावृत्तिसाधकशब्दप्रयोगः कर्तुं शक्यते। अस्ति

च तदितराखिलव्यावृत्तं स्वरूप वस्तुनि प्रत्येकं, विवक्षितघटे तदितर-घटतदन्यशेषपदार्थव्रातस्यान्योन्याभावभावात्। भवन्मतेनापि न च-यावत्तदवधारणाभावे सम्यगायातो घटो वाच्यतावर्त्म । जेगीयते चात एव- 'एको भाव' इत्यादिनैकपदार्थस्य यथार्थं स्वपरपर्यायैर्ज्ञाना-पादने सर्वपदार्थज्ञानसम्भवः । सदादिसप्तभङ्गकलितत्वाच्च वस्तूनां नैकान्तवाच्यता। प्रतिपादित चैतत् सविस्तरं-' 'अह देसो सब्भावे' इत्यादिनान्यत्र सूरिमुख्यैः । व्यवहारोप्यनेकान्तादेव सङ्गच्छते। ततश्चोक्तमिदं—

'जेण विणा लोगस्सवि ववहारो सव्वहा न निव्वहइ।
तस्स भुवणिक्कगुरुणो नमो अणेगंतवायस्से'।। त्यादि ।

एवं सामान्यविशेषोभयात्मकत्वमपि पदार्थानां प्रतिव्यक्ति स्व-सजातीयसमानताया इतरव्यावृत्तताया अनुभवाच्चावसेयमित्यल विस्त-रेण। अनेकान्तात्मकमेव वस्त्विति स्थितम। तत्किमित्याह -'गोचरः सर्वसंविदा'मिति। तत्र गावः-इन्द्रियाणि चरन्त्यस्मिन्निति 'गोचर-सञ्चरवहव्यजव्रजखलापणनिगमवकभगकषाकषनिकष' [ ५।३ १३१ ] करणाधारयोः पुन्नाम्नि इत्यधिकरणे घे गोचर–इन्द्रियविषयः तदे-वानेकान्तात्मकं वस्त्विवति लक्षणपक्षेऽभ्याहार्यम् । केषामित्याह'सर्व-संविदां' तत्र सर्वाश्च ता. संविद. सम्पूर्वकविदेर्भावाकर्त्रोः 'क्रुत्संपदा-दिभ्यः' [५।३।११४] इति क्विपि संविद इति। तासां सर्वसंविदाम्। अनेनैतत् ज्ञापयति, यदुत-यद्यज्ज्ञेयं तत्तत् सर्वमनेकान्तात्मकम्। न च ज्ञेयत्वस्याऽभावोस्ति क्वचिदपि। लक्षणपक्षे तु सर्वसंविदां तदेव वस्तुगोचर', न तदन्यथारूपं वस्त्वध्यवसेयं ज्ञानेन केनचिदपि, तदभावादेव। सर्वेत्यनेन सांव्यवहारिक–पारमार्थिकप्रत्यक्षपरोक्षा–दीनां सर्वेषां समानगोचरतामाह । नहि केवलेनाप्यनेकान्तात्मकता-मतिरिच्यान्येन प्रकारेणेक्ष्यते गोचरः। संविदामित्यनेन तु प्रमाणस्य सकलादेशतां ज्ञापयति। तेन सर्वं स्वधर्मसत्त्वान्वितं परधर्मासत्त्वा–

न्वितं च वस्तु गोचरीक्रियते। नहि प्रत्यक्षाद्यन्यतमेन ज्ञाते वस्तुनि स्वपरधर्मयो सत्त्वासत्त्वभानं नास्ति। यद्वा—न केवल द्रव्यमीक्ष्यते समीक्षानिपुणैरीक्षणैः, केवलाः पर्याया अपि च न। यतो यद्यद् घट-पटादि प्रेक्ष्यते चक्षुरादिना, तत्तत् सर्वं मृदादिद्रव्य-घटादिपर्याया-व्यतिरिक्तमेव। नहि मृत्स्नामपहाय पृथग्घटो, न वा घटत्वमपहाय मृत्स्नापि सा पृथग् निभाल्यते सुविदुषापि। न च वाच्य चेन्मृत्तिका सती तर्हि कुर्यात् स्वकार्यं शरावोदञ्चनादि, न च तद्भवद्विलोक्यते इति। नहि नियमोऽस्ति यद् या या मृत्तिका सा सा कुर्याच्छरावोदञ्च-नादि। अखातायास्तस्यास्तदभवनस्य प्रत्यक्षदर्शनात्। अन्यच्च-पर्यायाः क्रमभाविन इति न युगपत्पर्यायद्वयं सम्भवति। घटत्वं शरावत्व च पर्यायावेव। अन्यच्च—नासौ सृत्तया मार्त्तिकोयमिति व्यपदेश. शीतलत्वं जलशीतीकारश्च तस्य कथङ्कारं सम्पद्यन्ते ?, नहि ते घटधर्मा., तथा सति राजतादिकुम्भेष्वपि तदुपलब्धिप्रसङ्गात्। किञ्च-मृत्तिकानाशा-दिवत् सौवर्णकलशादौ नष्टं सुवर्णमपि स्यात्। तथा च न भवता देवानां प्रियाणामिव मार्त्तिकघट-सौवर्णघटयोः कथञ्चिदप्यन्तरं जाज्ञायीत। नच ऽऽभूषणान्यपि सौवर्णानि दारिद्र्यदशायामुपयोगितामियुः, सुव-र्णस्य नष्टत्वाद् भवन्मते। न चाभूषणभङ्गमात्रेण कनकोपलम्भोऽपीत-कनकनाम्। तदङ्गीकार्यमेव यद् घटादिदशाया तत् सुवर्णमृदाद्यस्त्येव। एवमेव घटत्वाद्याकाररूपाः पर्याया अपि न प्रत्यक्षविषय न जङ्घ-न्यन्ते। न च ते भिन्ना.। तथा सति तेषामुत्पादविनाशाऽभाव एव प्रसज्येत। यतो नहि क्रियाकृत चर्करोति कदाप्यद्रव्ये घटोत्पादक्रियां तन्नाशक्रियां वा। किन्तु द्रव्यस्यैव तथा तथा परिणामः। अत एव च प्रत्यभिज्ञायते प्रतिभाभरैर्यदुत-तस्या दृष्टपूर्वाया मृत्तिकाया अयम्। यद्वा—तद् दृष्टपूर्वमेव सुवर्णमिदमाभूषणीभूतम्। तद्वन्नाशेऽपि वस्तुनः स एव घटो योऽय कपालीभूतस्तदेव चाभूषणमिद सुवर्णीभूतमिति। नन्वेव द्रव्यपर्यायोभयात्मके वस्तुनि कथं पर्यायस्य नाशो द्रव्यस्य च

नाशाभावः ?, यतो यद्यनोऽभिन्नं तत्तत् समानावस्थाकमेव । यथा प्रेत्य गच्छति जीवे, गच्छति तज्ज्ञानमपि सहैव। एवमत्रापि पर्यायनाशे भवितव्यमवश्यं द्रव्यनाशेन । न च घटत्वादिनाशे नश्यति मृद्द्रव्य युष्मन्मतेनापीतिचेत्, न खलु द्रव्यपर्याययोर्भिन्नत्वमभिन्नत्वं वैकान्तेनास्ति । ततश्च द्रव्यवर्जिताः न पर्यायाः पर्यायवर्जितं च न द्रव्यमिति युक्तियुक्तः पन्था युक्तिवादिनाम् । जीवज्ञानयोस्तु दृष्टान्त एवासमीचीन । यतो ज्ञान तावत् गुणो न तु पर्याय । न भवत्येव च ज्ञानविस्मृतावपि जीवस्य नाशः । भवतु तथापि ज्ञानं भिन्नमेव, अन्यथा तन्नाशे जीवनाशापत्तेः । सत्यं, नश्यत्येवासो तद्रूपेण । यतो विशिष्टनाशे विशेषण-विशेष्यतदुभयाऽन्यतरनाश एव कारणम् । यथा दण्डनाशे पुरुषनाशे तदुभयनाशे वा नष्ट एव दण्डी पुरुष । न च पश्चाद् व्यपदिश्यते दण्ड्ययमिति सत्यपि पुरुषे । एवमेव च 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यती'ति श्रुति । सिद्धेष्वप्युत्पादादिश्च सङ्गच्छते । तत एवार्षे प्रथमसमयसिद्धो द्वितीयसमयसिद्ध इत्यादि सिद्धानामेकरूपाणामपि भेदाभिधानं सङ्गच्छते । द्रव्यपर्याययोः कथञ्चिद्भेदः कथञ्चिदभेदो वर्त्तते यतस्तत एव द्रव्यापेक्षया नित्यत्व पर्यायापेक्षयाऽनित्यत्वमपि च सङ्गतं भवति । 'तद्भावाव्ययं नित्यमि'ति हि नित्यलक्षणम् । न च पर्यायविशिष्टत्वेन द्रव्यनाशे द्रव्यत्वेन द्रव्यनाश । नहि दण्डित्वेन पुरुषनाशे पुरुषत्वेन पुरुषनाशोऽस्ति । पर्यायाणां भिन्नाभिन्नत्वं च द्रव्येष्वेव तदुत्पादाद् द्रव्यावस्थानेपि तन्नाशात् द्रव्यमन्तरेणाभावाच्च स्पष्टमेव । नहि जीवत्वमृते मनुष्यत्वमुत्पद्यते, तद्वतोऽजीवत्वप्रसङ्गात्। न च मनुष्यत्वनाशेन नश्यति सः, परलोकाभावप्रसङ्गात् । न चान्यत्र जीवादीष्यते मनुष्यत्वमित्येवं सर्वेष्वपि स्वीकार्यम् । एवमेव च परमाणोः नित्यत्वेऽपि तत्समुदायस्य स्कन्धपरिणाम । अन्यथा स्कन्धभावे परमाणुनाशभावस्य स्वीकार्यत्वापत्तेः । स्कन्धे

नष्टे च परमाणौ स्वीकार्य स्यादेव चोत्पादः । परैरपि परमाणूनां नित्यताङ्गीकारात । ननु स्कन्धत्वापत्तावपि परमाणुनेति महच्चित्रमितिचेत्, चित्रमेतन्महत्तममेव, किन्तु द्रव्यपर्यायस्वरूपमविदुषां, तद्विदुषां तु परिमाणत्वेन कथञ्चिन्नाशभावस्य द्रव्यत्वेन रूपेण चानाशभावस्याभिगमान्न चित्रलेशोऽपि । अत एव 'भेदादणु'रिति परमर्षिवाक्यमपि । गुणपर्याययोरपि संविद्विषयत्वेनानुसन्धेयैवानेकान्तात्मकता । यतो रक्तत्वनाशे रक्तत्वेन रक्तिमा नष्टा, न तु गुणत्वेन । गुणास्त्वन्ये सन्त्येव । एव घटपर्यायनाशेऽप्यन्यकपालादिपर्यायभावोऽस्त्येवेति ततश्च सिद्धं द्रव्यपर्यायोभयाद्यपेक्षयाऽनेकान्तात्मकं वस्तु गोचरः सर्वसंविदाम् । एवं प्रमाणानां निरूप्य विषयं नयानां त वक्तुकामा आहु -'एकदेशविशिष्टोऽर्थो नयस्य विषयो मत' इति । ननु च प्रमाणानां लक्षणोक्तौ प्रयोजनं 'तद्व्यामोहनिवृत्तिः स्याद्व्यामूढमनसामिहे'ति प्रतिज्ञावाक्यात प्रमाणलक्षणमेव वक्तुं युक्तमनूचानानाम्, न तु तद्दोषवादोपयोगिता प्रमाणफलविषयादि, किमुत नयतद्विषयादि, प्रतिज्ञाविरोधात्, सति च तस्मिन् स्पष्टमेव निग्रहस्थानमिति चेत्, न, प्रमाणानामित्यनेन करणानडन्तेन प्रपूर्वकेन सकर्मकत्वाद् भावाभिधायिना समग्रमेतत् प्रतिज्ञातमेव, दध्यानयननोदनाप्राप्ततज्ज्ञाजननोदनावत् । नहि तद्दोषेष्वनिरूपितेषु तदाभासरहितं तज्ज्ञायते । न च दूषणाभासज्ञानाभावे ज्ञायन्ते सम्यग्दूषणानि । यद्वा-न दूषणाद्यज्ञाने सम्यक्परीक्ष्येत प्रमाणलक्षणम् । न च निष्फला प्रवृत्तिः प्रेक्षावताम् । यद्वा-प्रमाणनिरूपणाद् व्यामोहनिवृत्तिज्ञापनं फलतया युक्तमेव, प्रकरणस्योपायताज्ञापनात् । विषयज्ञापनं तु न कथञ्चनापि योग्यतामतिक्रामति । तदन्तरेण प्रमाणोद्भवस्यैवाभावात् । कर्म चैषः । एवमेव च प्रमातापि निरूपयिष्यमाणोऽवसेय प्रतिज्ञात एव, कर्त्तृत्वात्तस्य । नन्वस्तु सर्वेषामेवा निरूपणमुक्तन्यायेन प्रतिज्ञातम्, पर नयादिना नार्थोऽप्रतिज्ञातेनेति चेत् । न तेषामपि प्रमाण-

देशत्वेन कथञ्चित्प्रमाणत्वानतिक्रमात् तत्प्रतिज्ञापि वृत्तैवावसेया प्रमाणशब्देन । तत्र किमप्यप्रतिज्ञातमभियुक्तानामुदीरणमित्यलं–प्रसङ्गेन । अथ को नयः ? कथं वा तत्स्वरूपमनभिधाय विषयाख्यानं ? यतो नह्यज्ञाते स्वरूपे विषयाख्यानं युक्तम् । यतः प्रमाणानामप्यभिप्रायैव स्वरूपमुदाजह्रु सूराचार्या विषयमिति । उच्यते-नीयते–प्राप्यते प्रमाणविषयीकृतस्यार्थस्यांशस्तदितरौदासीन्येनेति नय -अध्यवसायविशेषो वचनविशेषश्च । स च द्रव्यार्थपर्यायार्थभेदात् निश्चयव्यवहारभेदाद्वा द्विधा समासत. । मध्यमतो द्रव्यार्थिको नैगमसङ्ग्रहव्यवहारभेदात्त्रेधा, पर्यायार्थिकश्चर्जु सूत्रशब्दसमभिरूढैवम्भूतभेदाच्चतुर्धा, शतभेदोऽपि प्रत्येकमय सप्तविधोऽपि । व्यासतस्तु 'जावइआ वयणपहा तावइआ चेव हुंति नयवाअ' न्निवचनाद्वचनवादपरिमाणो नय. । अत एव चायं प्रमाणांशतया विकलादेश इति गीयते गीतार्थतमैः । भवति चायमेवापलापादितरधर्माणा नयाभासतयाऽप्रमाणम् । ततश्च मिथ्यावादः । प्रोक्तं चातो—

'जावइआ नयवाआ तावइआ चेव हुंति परसमय'त्ति । तथा च यथार्थमुक्तम्- 'सदेव सत् स्यात् सदिति त्रिधार्थो मीयेत दुर्नीतिनयप्रमाणै'रिति । स्वरूपाख्यानमप्यस्य प्रमाणैकदेशरूपत्वादेव न पृथक्कृतम् । यद्वा-विषयप्रतिपादनमेवास्य स्वरूपव्यावर्णनतुल्यम्, विषयव्यावर्णनभेदेनैव नयोऽश्नुते भिन्नतामिति । अथ व्याख्या-एको न तदितरः, इतरविवक्षणे हि प्रमाणस्वरूपापातात्, देशः- अवयव उत्पादादिर्द्रव्यादिर्वा, नत्वेको धर्म । कैश्चिन्नयैः धर्मद्वयादीनामप्यभिधानात् । नयता च तेषां परस्परनिरपेक्षमभिधानात् गुणप्रधानभावेन वाऽभिधानात् । अत एव च 'दोहिवि णएहि नीअं सत्थमुलुएण तहवि मिच्छत्तं ।

जं सविसयप्पहाणत्तणेण अन्नोन्न–निरवेक्खे' ति प्रोचिवांसः प्रवचनप्रधाना । तेनैकदेशेन द्रव्यत्वादिना विशिष्टो-विशेषितो द्रव्यं-पर्यवा वा सामान्यं विशेषो वा ज्ञानं क्रिया वा सत्तामर्हतीत्येवम्भूतोऽर्थ -

पदार्थः जीवादिर्मोक्षहेतुर्वेति। किमित्याह-नयस्य प्राङ्निर्णीतरूपस्य-विषयो-गोचर., 'पुंनाम्नी'ति घो [ ५।३।१३० ] विशेषेण सीयन्ते-बध्यन्त इन्द्रियाण्यस्मिन्निति विषय इति व्युत्पत्ते। नेदं स्वमनीषिकयोच्यते इत्याहु-'मत' इति। तीर्थंकरगणधरादिभिः प्रतिपादितः। एवं नयविषयं निरूप्य तस्य सम्भवत्यामपि प्रवृत्तावन्यत्र प्रायेण श्रुतविषये प्रवृत्तिभावाद् यथार्थश्रुतलक्षणायाऽऽह—

नयानामेकनिष्ठानां प्रवृत्तेः श्रुतवर्त्मनि।
सम्पूर्णार्थविनिश्चायि स्याद्वादश्रुतमुच्यते॥ ३०॥

ननु पूर्वमुक्तमेव शाब्दलक्षणं श्रुत च शाब्दमेवेति किं पुनर्विवेचनेनेति चेत्। सत्यमुक्तं, परं लोकोत्तरस्य यथार्थताप्रतिपादनार्थैतत्। यद्वा-पूर्वं प्रमाणतयोक्तमपि शाब्दं श्रुतं कथं तत्प्रमाण भवितुमर्हति ? तस्यैकदेशविशिष्टार्थप्ररूपणप्रवणत्वात्, प्रमाणस्य च सकलार्थादेशदक्षत्वादिति शङ्कासम्भवात् पुनरेतत्स्वरूपाभिधान युक्तमेव। अथवा 'जावइया नयवाया तावइया चेव हुंति परसमय॥'त्ति समाकर्ण्य समीक्षापूर्विण आरेकेरन् यदुत-लोकोत्तरं श्रुतं नयवर्जित न वा ? आद्ये, न तादृगमस्ति परमपुरुषवचनं यत्र न नयः। अत एव चानुयोगद्वारेषु नय इति तुर्यं द्वारं जागद्यते आगमानुयोजकैरिति प्राचीनपुरुषवचोव्याघातः, तद्वत्त्वे च स्पष्टं परसमयतेति को भेदो लौकिकलोकोत्तरयोरिति तन्निरासायैतत् 'नयाना'मित्यादि। तत्र नया -प्रागुक्तस्वरूपाः तेषां नैगमादीनां, द्रव्यार्थिकादीनां वा। कीदृशां ? इत्याहु. 'एकनिष्ठाना'मिति। तत्र नितरामन्यानुपदेशेन स्वतन्त्रं स्थीयतेऽनयेति भिदादित्वादङि निष्ठा-निश्चयो व्यवस्थोत्कर्षो दिशा वा 'निष्ठानिष्पत्तिनाशान्ता काष्ठोत्कर्षे, स्थितौ दिशी'तिवचनात्। तथा चैका निष्ठा येषां ते एकनिष्ठा' तेषामिति। ननु पूर्वं विषयाख्याने स्वरूपाख्याने चोक्तमेवेदमिति नार्थ. पुनर्वचनेनेतिचेत्, सत्यमुक्त स्वरूपादिषु, परं स ए-

षार्थोऽनेन पुनर्निरूप्यत इति क्षन्तव्योऽयमेकः सूरेरपराध. । तत्त्वतस्तु नयानां कथं प्रमाणता समापद्यते इति दर्शनाय तेषां प्रागुच्यमानं स्वतन्त्रं स्वरूप न दोषमावहति। यद्वा-स्याद्वादश्रुतस्य सम्पूर्णार्थवाचकताज्ञापनायैतदिति, सकलादेशि प्रमाणं वा नैकदेशविशिष्टमर्थं न गृह्णाति । शते गृहीते गृहीता एव स्यु पञ्चाशदिति माभूत्तेषां नयतापत्तिरिति निष्ठाशब्देन तद्व्यवच्छेद. । यतो न प्रमाणेनैकदेशविशिष्टतयैवार्थो निश्चीयते, किन्तु यावद्धर्मविशिष्टतया । अत एव च 'स्यात् सदि'ति प्रमाणवाक्योल्लेख सङ्गच्छते । किमित्याह-'श्रुतवर्त्मनि प्रवृत्ते'रिति । तत्राश्रावीति श्रुतम् । आदितो हि भगवानवाप्तकेवलः तथास्वाभाव्यात् प्रवचनप्रवर्त्तनफलकतीर्थंकरनामकर्मोदयतः कृतार्थोऽपि भव्योपकाराय तीर्थं प्रवर्त्तयन्नाख्यात्यर्थम्-'अत्थं भासइ अरिहं'त्ति वचनात् । ततश्च प्रवर्त्तते अनेकातिशयरत्नरत्नाकरगणभृद्बुद्धिपटगृहीतार्थविनिर्मितपुष्पमालेवमितोत्तमाङ्गधार्यद्वादशाङ्गीरूपं तीर्थमिति सत्यमुक्तम् श्रुतत्वम् । उक्त' च—'सुत्तं गंथंति गणहरा निउणं'ति । तदेव वर्त्म—मार्गः । नह्यन्तरेणाऽऽगममन्योऽस्त्यध्वा पदार्थाविबोधस्य, अतीन्द्रियाणामर्थाना सद्भावप्रतिपत्तये न मानमागमादन्यदस्ति पर, तच्च जिनोदितमिति वचनात् । तत्र श्रुतवर्त्मनि प्रवृत्तेः पूर्वोक्तानां नयानां प्रवर्त्तनात । एतेन ज्ञापित चैतत यन्नागमवाक्यमेकमपि विद्यते नयप्रवृत्तिशून्यम् । उक्तम् च श्रुतकेवलिपादैरपि—

'नत्थि नएहिं विहुणं सुत्तं अत्थो अ जिणमए किंचि'त्ति । पूज्यपादैरपि 'न सुत्तमित्तेण अत्थपडिवत्ती । अत्थगई वि अ नयवायगहणलीणा दुरहिगम्म'त्ति । यच्च नाधुना नयसमवतार' श्रुते, तदपि मेधादिहान्या अनुयोगपृथक्करणादेव । तदुक्त—

मूढनइय सुयं कालियं तु न नया समोयरंति इहं ।
अपुहुत्ते समोयारो णत्थि पुहुत्ते समोयारो ॥१॥ [विशेषा०]

इति । कियन्तं यावत्कालं आसीन्नयानामवतार ? इति चेद्, आर्य-वज्रपादान् यावदिति गृहाण । 'जावंत अज्जवइर'त्तिवचनात् । नन्वेवं नयावताराभावे कथमवतार्यते क्वचिदितिचेत्, अनुयोगद्वाराद्यभिहिताशया एवावतार्यन्ते वसतिप्रस्थकयोरावश्यकाभिहितनीत्या च सामायिकादौ । अत एव च 'न नया समोयरति'त्ति प्रतिपादितम् । ननु का हानिर्यद्यवतार्येत नयप्रकरश्चेद् । एकैकानां नयानां शतशो भेदभिन्नत्वादन्यनयवक्तव्यतामज्ञानादन्यत्र समवतारयतो भवेन्मिथ्यात्वापात इति निषिद्धोऽसौ । यद्वा-नाऽसौ निषेध आत्यन्तिक' । यदाह-'आसज्ज उ सोयारं नए नयविसारओ बूयत्ति । ननु व्याहतमिद परस्परमिति चेत्, नियमाभावपरत्वादेतस्य । यद्वा अवतारितनयावतारविषयत्वमुत्तरस्येति न व्याघानगन्धोऽपि । यद्वा-निषेधो हि सूक्ष्मसूक्ष्मतरादिगवेषिणामृजुसूत्रादीनामनुज्ञा च नैगमादीनां स्थूलविषयकाणाम् । यत् उक्तम्—

एएहिं दिट्ठीवाए परूवणा सुत्तअत्थकहणा य ।
इह पुण अणब्भुवगमो अहिगारो तीहि ओसन्न ।। ति [विशेषा०]

कृत प्रसङ्गानुप्रसङ्गे न । नयानामेकनिष्ठानां श्रुनवर्त्मनि प्रवृत्तिस्तु 'एगे आया एगे दडे' इत्यादिसूत्रपर्यालोचनाद्विचारचतुराणां स्पष्टैव । अवोचुश्च सूरयोऽपि 'पाडिक्कनयपहगयं सुत्त'ति । तथा च या या स्वसमये वक्तव्यता साऽपि तत्तन्नयप्ररूपितैवेति व्याख्याविदा मतम् । अत एव च बहुश्रुतत्वेऽपि निश्चयानभिज्ञत्वं समयप्रत्यनीकत्वं च प्रतिपाद्यमानं सङ्गच्छते । तदुक्तम्—

'जह जह बहुस्सुओ समओ अ सीसगणसपरिवुडो अ ।
अविणिच्छिओ अ समए तह तह सिद्धन्तपडिणीओ ।। [सन्मति०]

इति । अन्यथा बहुश्रुतत्वं विरुद्ध्येतैव । नयप्रवृत्तिमयत्वे तु श्रुतस्यावि-

निश्चितसिद्धान्तता स्यादेव । प्रतिपादितं चैवमेव 'ज जह भणियं सुत्ते' इत्यादिनापि । कथ तदा निश्चितश्रुतत्व प्रमाणभूतं वा श्रुतं स्यादित्याह- 'सम्पूर्णार्थविनिश्चायी'त्यादि । सम्पूर्ण सकलसदसदादिधर्मकलित-त्वात यावद्धर्मविशिष्टोऽर्थो-घटादिर्जीवादिर्वा तं विनिश्चिनुत इत्येव-शीलं यत्तत्सम्पूर्णार्थविनिश्चायि, न नयादिवदेकादिधर्मविनिश्चायी-त्यर्थ । किन्तु सकलनयाभिप्रेतधर्मसमुच्चयनात् सम्पूर्णधर्मकलिता-र्थाभ्युपगन्तृ । अत एवोच्यते—

'भद्दं मिच्छदंसणसमूहमइअस्स अमयसारस्स । जिणवयणस्स भगवओ'त्ति । न च वाच्य कथं नयानां मिथ्यादर्शनत्व ? तथात्वे च तेषा कः प्रतिविशेषो नयदुर्नययोः ? । नयवाक्यं चाभिमतमेवाभि-युक्तै र्यदुक्तम् स्तुतिषु—

'सदेव सत्स्यात्सदिति त्रिधार्थो, मीयेत दुर्नीतिनयप्रमाणै. ।
यथार्थदर्शी तु नयप्रमाण-पथेन दुर्नीतिपथं त्वमास्थ ॥१॥ [अन्ययोग०]

इह च नयप्रमाणपथस्य यथार्थदर्शिदृष्टतादर्शनेन स्पष्टैव समी-चीनताऽवाचि । प्रतिपादितं च पूर्वमपि—'नत्थि नएहि विहुण'-मित्यादिना भवद्भिरपि जिनवचनस्य नयमतत्वं, न च तन्मिथ्येति कथङ्कार विरुद्धमिद परस्परार्थं श्रद्दध्महे इतिचेत् । सम्यक्पर्यनुयु-क्तस्थाः, परमेतावत्तावच्चिन्तनीयं त्वया यदुत—नयैरपि सकलधर्मवि-शिष्टं घटादि वस्तु न प्रतिपाद्यत एव, किन्त्वेकधर्मविशिष्टमेव । तथा च कथं तेभ्य सम्पूर्णार्थबोधो भविता, चेन्न भविता, तर्हि स्पष्टमेव यथार्थपदार्थानवबोधकत्वं तस्य, एतमंशमधिकृत्यैव तस्य मिथ्यात्वनया प्रतिपादनमभिप्रेतमभियुक्ततमै. । असम्पूर्णवस्तुप्रतिपादनस्य मिथ्या-त्व तु—

'पयमक्खर व इक्क जो न रोएइ सुत्तनिद्दिट्ठं' ।
सेस रोयंतो वि हु; मिच्छादिट्ठी मुणेयव्वो' ॥१॥

तथा 'सूत्रोक्तस्यैकस्याप्यरोचनादक्षरस्य भवति नरः ।
मिथ्यादृष्टि. सूत्र नः प्रमाणं जिनाभिहित' ॥ १ ॥

मित्यादिवदवसेयम् । यतस्तेपि द्रव्यार्थिक- पर्यायार्थिकाद्याः क्रमेण स्वाभिमतं द्रव्यपर्यायॉस्तदन्यद्वा व्यवस्थापयन्तोऽपीतरमुपेक्षयन्त. कथमिव सम्पूर्णार्थदेशकत्वाभावान प्रमाणतां सम्यक्त्ववाच्यतां वा प्रतिपद्येरन् । तदेतदुक्तमेव नयकाण्डे नयनिरूपणानिपुणैः 'तम्हा सव्वेवि नया मिच्छादिट्ठी त्ति । हेतुरप्येष एवोदितस्तत्र । यत आहु·- 'सपक्खपडिबद्ध'त्ति । नयनयाभासयोरेतावानेव भेदो यदाद्योऽभिप्रेतादितरान्धर्मानप्रतिपादयन्नेव स्वाभिमत समर्थयति । परस्तुस्वाभिमतं समर्थयन्नपह्नुते तदन्यान् यथा तथा । तथा च तस्योल्लेख सदेवेति । परं सम्पूर्णार्थदेशकत्वाभावरूपं मिथ्यात्वं तूभयत्राप्यविशिष्टमेव । विशेषेणानेनैव आद्यस्य सम्यक्त्वहेतुता स्यात् तत्र भजनाप्रक्षेपमात्रस्य न्यूनत्वात् । अन्यत्र तु निरस्य एकान्ताभ्युपगम । सति च तस्मिन्निरासे उपनीतायां भजनासुधावृष्टौ स्यादेव तस्यापि सम्यक्त्वहेतुता । यदवोचन् ते उ भयणोवणीया सम्मदंसणमणुत्तरं होंति'त्ति सत्यमुक्तं 'सम्पूर्णार्थविनिश्चायी' ति । तथात्रे किमित्याह- 'स्याद्वादश्रुतमुच्यते' इति । स्यादित्यनेकान्तद्योतकमव्ययम् । ननु न दृश्यते इदं द्योतकेषु चादिष्विति चेत् । सत्यं, परं तानि न परिगणितानि, किन्तूपलक्षितानि । अत एव चादिशब्दोपन्यासेऽपि बहुवचनमकारि शब्दानुशासने सूरिभि । शैलीयमाचार्याणामादिशब्दोपन्यासेऽपि बहुवचनेनाकृतिगणद्योतनमिति । उच्यते चान्यत्रापि--

'इयन्त इति सङ्ख्यानं, निपातानां न विद्यते ।
प्रयोजनवशादेते, निपात्यन्ते पदे पदे' ॥ १ ॥ इति ।

यद्वा—अस्त्येव विभक्तिप्रतिरूपकाणां सूत्रकृद्भिरभिमताव्ययता । अनेकान्तद्योतकं स्यादिति पठितं तत्र ज्ञेयम् । तस्य वदनं- प्रतिपादनं

स्याद्वादः, तस्यैव सम्यग्न्यायमार्गत्वात्तदुक्तम्—

'इमां समक्षं प्रतिपक्षसाक्षिणा मुदारघोषामवघोषणां ब्रुवे।
न वीतरागात् परमस्ति दैवत, न चाप्यनेकान्तमृते नयस्थिति' ॥१॥

रित्यादि। तेन स्याद्वादेनोपलक्षितं श्रुतं स्याद्वादश्रुतम्। मध्यमपदलोपस्तु शाकपार्थिवादित्वात्। उच्यते-प्रतिपाद्यते। तस्यैव सकलनयाभिप्रायसमुच्चयप्रत्यलत्वात्तदुक्तम्—

अन्योन्यपक्षप्रतिपक्षभावा द्यथा परे मत्सरिण प्रवादा।
नयानशेषानविशेषमिच्छन् न पक्षपाती समयस्तथा ते ॥ १ ॥

तथान्यत्रापि - नयास्तव स्यात्पदलाञ्छिता इमे,
रसोपविद्धा इव लोहधातव.।
भवन्त्यभिप्रेतफला यतस्ततो,
भवन्तमार्या॑ प्रणता हितैषिण.॥२॥ इत्यादि।

ननु च सर्वनयमयत्वे स्याद्वादश्रुतस्य कथ प्रामाणिकत्वं, प्रत्येकं नयानां प्रमाणत्वाभावात। तथा चोचु —प्रत्येक यो भवेद्दोषो, द्वयोर्भावे कथं न, स' इतिचेत, न, कफहेतुत्वे गुडस्य नागरस्य च पित्तनिमित्तकत्वेऽपि संयुक्तौषधे न विकृतिकणिकापीक्ष्यते। तदुक्तम्—

'गुडो हि कफहेतु. स्यान्नागर पित्तकारणम्।
द्वयात्मनि न दोषोस्ति, गुडनागरभैषजे ॥१॥ [ वीत० ] इति।

अन्योन्यापेक्षोद्भव एष गुणो जात्यन्तरं चेद युग्मम्। तथाऽत्रापि समवसेयमिति। ननु यदि प्रत्येकं नयेषु सम्यक् श्रुतत्वं न, तर्हि समुदायरूपे तस्मिन् कथं तत् भवेत्? यतो यदि रेणुषु प्रत्येकं न तैलांशो, नैवाप्यते समुदायेऽपि तर्हि तत, स्याद्वादश्रुतस्य चाभि-

मन्यते सम्यक् श्रुतत्वं, तत्स्वीकार्यं प्रत्येकं नयेषु सम्यक्त्वमितिचेत् ! । न, यतः प्रतिपादितमेव पूर्वं नयस्वरूपाख्याने तेषां एकनिष्ठत्वम् । तावन्मात्रेण नयाभासेभ्यस्तेषां भिन्नत्वं च । ततः समुद्रांशो यथा न समुद्रो न वाऽसमुद्रस्तद्वदिमेऽपि 'निअयवयणिज्जसच्च'त्तिवचनात् प्रमाणांशभूता इति न ते प्रमाणं न चाऽप्रमाणं सकलांशोपेतस्य च समुद्रत्ववत् सकलनयमयस्याद्वादश्रुतस्य सम्यक्त्वमत एवोक्तम्-'अन्नोन्ननिस्सिआ पुण हवंति सम्मत्तसब्भाव'त्ति । ननु तेषां मिथ्यात्वतया प्रतिपादनात् मिथ्यात्वसमुदाय एष इति नास्य समीचीनतेतिचेत्, नेतरोपेक्षारूपमिथ्यात्वांशस्य स्यात्कारेण दूरीकरणाच्छोधितविषस्य रसायनीभाव इवास्य समीचीनता भवन्ती न निवारयितुं शशक्यते शक्रसहस्रेणापि । अत एवोच्यते विशकलिताना नयानां सम्यक्त्वाभावेऽपि समुदाये सम्यक्त्वं यदाह—

जह णेगलक्खणगुणा वेरुलिआई मणी विसजुत्ता ।
रयणावलीववएसं न लहंति महग्घमुल्ला वि ॥१॥

तह निययवायसुविनिच्छआ वि अन्नोन्नपक्खनिरवेक्खा ।
सम्मद्दसणसद्दं सव्वे वि नया न पावंति ॥२॥

जइ पुण ते चेव मणी जहा गुणविसेसविभागपडिबद्धा ।
रयणावलित्ति भण्णइ जहइ तं पाडिक्कसन्नाओ ॥३॥

तह सव्वे नयवाया जहाणुरूव निउत्तवत्तव्वा ।
सम्मद्दंसणसद्दं लहंति न विसेससन्नाओ ॥४॥ [सन्मति०] इति ।

गुणप्रोतत्वादेव यथा मणीनां रत्नावलीति व्यपदेश. । एवमत्रापि सर्वेषु नयाभिमतेषु स्यात्कारगुणस्यूतेषु सम्यक्श्रुतत्वेन स्याद्वादश्रुतमितिव्यपदेशः । यथा च तत्र प्रत्येकसञ्ज्ञा अपगच्छन्ति, प्रतिपाद्यते च रत्नावलीति । तथाऽत्रापि नयसञ्ज्ञां विजहतस्त एव नयाः

स्याद्वादश्रुतसञ्ज्ञामभिरूपतरां नूतनां लभते। तथा च यथा केवल-मणिराशिरपि न रत्नावलीव्यपदेशभाजन तथा निरपेक्षोऽन्योन्यं नय-समुदायोऽपि न स्याद्वादश्रुतसञ्ज्ञाभाक्। किन्तु व्यवस्थापित एव। अत एव सामान्यविशेपोभयनिरूपिणोऽपि न वैशेपिकस्य विशिष्टता-ऽन्यमतेभ्यः। अत एव च सकलनयमयस्याद्वादश्रुतवेदिनोऽपि सूत्रार्था-दिना सम्यग्योजनाभावेनानिश्चितत्वमभिहित सङ्गच्छते। तदुक्त-

न हु सासणभत्तीमेत्तएण सिद्धंत जाणओ होइ।
नवि जाणओ अ नियमा पण्णवणानिच्छिओ णाम'॥ त्ति।

अत एव चार्वाग्दशभ्य पूर्वेभ्योऽन्यूनेभ्य उभयथा श्रुतोक्तिरपि। सम्यग्दृष्टिपरिगृहीतस्य सम्यक् श्रुतत्वमन्यथेतरत्वमिति। सम्यग्दृष्टिश्च स एव, यो यथार्थतया पदार्थपरिभावयिता। यत उक्तं—

'एए जिणपन्नत्ते सद्दहमाणस्स भावओ भावे।
पुरिसस्साभिणिवोहे दंसणसद्दो हवइ जुत्तु॥१॥ त्ति

ननु चैव मिथ्यादृष्टिश्रुत वेदादि लौकिकं च भारताद्यपि श्रुत सम्यग्दृष्टिपरिग्रहपूत स्यादेव सम्यक्छ्रुतम् 'सम्यग्दृष्टिपरिग्रहपूतम् जयति श्रुतज्ञान'मितिवचनात् को विशेषोऽनयो. स्याद्वादसामान्य-श्रुतयोरिति चेत्। न कोऽपि।

'द्रष्टुर्दर्शननैर्मल्ये, भिदा नासन्नदूरयो.।
न स्याद्वादेतरो भेद. सद्दृष्ट्या ग्रहणे तथा॥

केवल न नया सर्वे, तत्र सन्त्यत्र सन्ति च।
हेतुरित्येष वैषम्य-व्यपदेशो बुधैर्मतः॥

तत्रेतरेऽनया बुद्ध्या, योज्या आदाय चान्यत.।
अन्योन्यानामपेक्षापि, दुष्कर तत्तथा न ते॥

नया अत्र समे सन्ति, लक्ष्यताभिमुखास्तथा ।
स्थिता अपीक्षिताश्चे ते तदाऽनेकान्तवादता ॥

अत एव च लक्षणेन कृतो निर्देशोऽत्र 'सम्पूर्णार्थे'त्यादिना। अन्यथा ब्रूयुरन्यत्राभिहितागमलक्षणवत् स्याद्वादश्रुतमाप्तोक्तमिति । 'उच्यते' इति तु लक्षणाधीना हि लक्ष्यता । यत्रैतल्लक्षण तदिदं स्याद्वादश्रुतमित्युच्यते, न तु रागमात्रेण । न चान्यस्य मिथ्याश्रुततापादनं द्वेषोपहितं, किन्तु तथा भावात्तस्येति ज्ञापनाय । यदाहुरन्यत्राप्यर्चितचरणा —

स्वागमं रागमात्रेण, द्वेषमात्रात् परागमम् ।
न श्रयामस्त्यजामो वा, किन्तु मध्यस्थया दृशे ॥१॥ ति ।

सतां न स्वान्यभेदोऽस्ति, विश्वेऽपि हितकाङ्क्षिणाम् ।
गुणाढ्या यान्ति नश्यन्ति दोषव्याप्ता स्वय तत. ॥१॥

सतां गुणाः सपक्षा य-द्विपक्षा गुणवर्जिताः ।
स्युस्तत्राद्भुतमीचे नो, पुष्यत्यर्कोदयेम्बुजम् ॥२॥

अनेकान्तश्रुते सन्तो, भक्तिप्राग्भारनिर्भरा ।
दृश्यन्ते तत्र नान्योस्ति, हेतुः सद्वस्तुनिर्णयात् । ३ ।

एवं सप्रपञ्च प्रमाणं प्रमेयं च निरूप्यापि शेषीभूत प्रमातारं निरूरूपयिषिवत्र आहु —

**प्रमाता स्वान्यनिर्भासी, कर्त्ता भोक्ता विवृत्तिमान् ।**
**स्वसंवेदनसंसिद्धो, जीवः क्षित्याद्यनामकः ॥ ३१ ॥**

प्रमिमीते प्रमापयति वस्तु तत्स्वरूपं चेति प्रमाता, प्रमिनोति-

था प्रक्षिपति सर्वमन्यदधस्तान करोति स्वभोग्यतयेति प्रमाता, प्रमीनाति–वोपादानेनान्यान्यान्पुद्गलान विनाशयति यथेच्छ परिणामात तत्पूर्वपर्यायांस्त्याजयित्वा हिनस्तीति वा प्रमाता। तस्यैव प्रमातृत्वं, योऽत्रोद्दिष्टः। नेन्द्रियाणां मनसो वा। यतो हि द्रव्यरूपाणि, जडानि तानि, न तदभावे तृणकुब्जीकारेऽप्यलंभूष्णूनि। न च तान्यात्मानं प्रयुञ्जते, किन्तु तेन प्रयोज्यान्येतानि। स्वतन्त्रश्च कर्त्ता भवति। अन्यच्च-भावेन्द्रियाणि यानि लब्ध्युपयोगरूपाणि भावमनो वा परिणामात्मकं यत्तदपि करणरूपाण्येव, न कर्त्तृणि। करणस्य सकर्त्तृकत्वनियमाच्च भाव्यं तेषामधिष्ठात्रा। न चानुपयुक्ते आत्मनि स्वविषयंपरिच्छिन्दन्त्यक्षाणि मनो वा सुप्तमुर्छिताद्यौ। तथानुभवात्। न चेन्द्रियाणां परिच्छेदकत्वेऽन्यान्याक्षविषयानुभवाभावात्तत्स्मरण स्याद्, येन मया श्रुतमित्यादिविषयपञ्चकसङ्कलना भवेदेकस्य कस्यापि। न च ज्ञानज्ञात्रोरैक्ये ज्ञानवानहमित्याकारकः स्यात् प्रत्ययो निराबाध। ज्ञानालयत्वेन भिन्नत्वे तु स एव नामान्तरित प्रमाताऽभ्युपगतो भवति। न चाभिन्न. सन्तान. सन्तानिन क्षणक्षणावस्थानप्रष्ठ सन्तानिनं सञ्जानीत, सन्तानस्यापि च सत्त्वेन क्षणिकत्वात्तौ भक्षितो लशुनो न ज्वर. शम गत' आयातो न्याय.। न भवेदेव वासनामङ्क्रमादि सन्तानिनीव क्षणक्षयिणि सन्तानेऽपि। तदभावे च कुतस्तरा स्मरणं प्रत्यभिज्ञानादि वा। तदभावे च कथं भवतां बौद्धानुयायित्वाद्यवगति, न चेत् साऽलं विवादेनाशुभसंस्काराऽभावेन पूर्वव्युद्ग्राहित्वाभावात् स्वाभाविकोपदेशेनैव सम्बोधभावात्। किम्भूतः पुनरित्याह-'स्वान्यनिर्भासी'ति। स्व-जीवो विवक्षित', स एवान्ये च तद्भिन्ना ज्ञानज्ञेयाद्या तान् स्वान्यान्, निर्भासते-प्रतिक्षणमुपयोगस्वाभाव्यान्निश्चिनोतीत्येवंशीलो स्वान्यनिर्भासी। निरुपसर्गेण च तस्योपयोगस्वभावतां ज्ञापयति। नहि आकाशवज्जडो जीवश्चेतनासमवायाच्चेतनः, तथात्वे हि 'कालखात्मदिशां सर्वगतत्वं परम महदि'–

तिवचनात् सर्वत्राप्याकाशादीना सत्त्वात् किमिति नैतानि चेतयन्ति ? कथं वा व्यपदिश्यते आत्मनां चेतनेति ?, समवायोऽपि कथमेषां समानदेशस्थितत्वेऽपि जीवेनैव चेतनायाः सम्बन्धं जायटीति ?। सम्बन्धश्च वियुक्तयोर्मीलनम् । न तावच्चेतना जीवो वाऽन्योऽन्यम् वियुक्तो दरीदृष्टो दृष्टिमता केनापि । न च समवायोऽपीक्ष्यते निपुणावेक्षणापरैरपि काष्ठद्वययोजनायुक्तकीलकादिवत् । इहेदमिति मत्या चेत्सम्बन्धाकाङ्क्षा लाघवाच्चैकः समवाय. कल्प्यतेऽन्यथानन्तसम्बन्धकल्पनाप्रसङ्गात् । तदपि न निरन्तरसुहृदोऽन्तरा प्रत्येष्यन्त्यपरे । यत सम्बन्धस्योभयवृत्तित्वनियमादिह द्रव्ये गुणे वा समवाय इति प्रत्ययोऽस्ति न वा ? । आद्ये, तत्रापि सम्बन्धान्तरं समवायो वाऽन्यः कल्पनीयो, भविष्यति चानन्तानवस्थावल्लरी मूलक्षयकरी प्ररूढैव सति । स्वरूपसम्बन्धेन समाधाने तु किमिति प्रथमतरतदुल्लङ्घनेन प्रत्यपायभाजनं वोभूयते भूयो भावद्भिः । अन्त्ये च, स्पष्टं समवायाभावोऽभ्युपगतो भवेत् । न च कल्पनासहस्रेणापि शाशक्यते शक्तिसंग्रहैकविधात्रापि शशशृङ्गमुत्पादयितुं, येन कल्पितः समवायः पदार्थरूपतामारोहेत जगति । अनन्तसंबंधकल्पनागौरवं च स्वाभिमताय विश्वविधात्रे अल्पबुद्धिकत्वहेतुतयोपालम्भविषये प्रणेयं, नान्येषां कथनीयं कथमपि तत् । किञ्च-समवायोऽपि भवत्कल्पित. सर्वत्र जगति वर्त्तते एकदेशे वा घटादौ ? । सर्वत्र चेत्, वाय्वाकाशादौ रूपचेतनादिसमवाये किं बाधकं ?, न तत्र रूप चेतना वेति चेत्, ननु केयं बालक्रीडा, यदि तत्र रूप चेतना वा भवेत्स्वतः, किं शिखण्डिना ? सम्बध्यते चेत्तेन, नवीनेश्वरावतार. कणादो महीयान् महीयसां कालादीनां समग्राणां चैतन्यादिविधाता । परम् दरिद्राणां जायन्तेऽफलिनोपि मनोरथाः । न चासौ तु महर्षेरभूदिति दुर्भाग्य महज्जगत. । सर्वत्र वर्त्तमानोऽयं किं सर्वात्मना वर्त्तेत देशेन वा ? । आद्ये, स्पष्टमनन्तसमवायकल्पनापत्तिर्मनोरथमहीरुहोन्मूलने करिणीव विभ्रा-

जते। अन्त्ये तु, सावयवत्वापत्तिः समवायस्य। तथा च अवयवावयविनोः समवायस्वीकारात्तत्रापि समवायस्वीकारोऽपरिहार्यो यमदण्ड आपतेदेव। अन्यच्चासौ समवाय उपलक्ष्य जात्यादीन् समवैति व्यक्त्यादिनोत समवीयमानान स्वयं तान्प्रयोजयति ?। आद्ये, अहो ! समवायस्य सर्वव्याप्तिमत्त्वाच्चैतन्यमत्त्वाद् द्रव्यगुणयोगाद्विविधातृत्वाच्चायत्नसिद्धम् विधातृत्वम्। अन्त्ये तु; विधातारमुपालभस्व येनासमवाय योजिता. पूर्वमे त्यलम् कल्पनाकलितमात्रार्थवादनिपुणैः। विशिष्टता च सम्बन्धाविनाभाविनीत्यपि न बाधकम्। यतोऽस्त्येवाविष्वग्भावरूपः सम्बन्धो द्वयोरपैव चायुतसिद्धता दुक्केति स्वभावत एव जीवे चेतनेति। न चार्हति स्वभाव पर्यनुयोगम्। अन्यथा शक्यते भवानपि पर्यनुयोक्तु केनापि यदुत-कथमर्हति नैवाप इति युक्तमुक्तम् 'निर्भासि'ति। स्वान्यानिर्भासकत्वाभावे च प्रमातृत्वमेव न स्यात। परनिर्भास्यत्वे तस्याप्यपरनिर्भास्यत्वे न कदाप्यङ्कुरयेद् बोधबीज ग्रावमनवस्थया। न च वाच्य स्वयं स्वस्कन्धम् नारोढुम समर्थः सुदक्षिणोऽपि, नवा सुनिशितापि शस्त्री स्वां छिनत्तीति न सुनिपुणोऽपि प्रमाता स्वं प्रमातुमलम्भविष्णुरिति। नहि दृष्टान्तमात्रेणार्थप्रत्ययो यथार्थप्रतीपिपूणां भवेद्। अन्यथा मृगतृष्णाया अलीकत्वेन स्वात्मनोप्यलीकत्वम्। अत एवोक्तम् प्राग् यदुत—

अन्तर्व्याप्त्यैव साध्यस्य सिद्धे र्बहिरुदाहृति. ।
व्यर्थैव तदसद्भावेप्येव न्यायविदो विदु' ॥ रिति।

न च भवति कस्याप्येव प्रत्ययो यदुत-अह मा न जानामीति। किंतु दुःख्यहं सुख्यहमित्यादौ स्पष्टैव सुखसमानाधिकरणकाऽहता ज्ञानवत्ताऽत्मन। न च स्यादृतेऽनुभवापलापसामर्थ्यम् अनात्मनीनात्परेषाम्। दृष्टान्तो न च नास्त्यत्र। यथा न पृथ्वीप्रभासनप्रत्यलप्रभापतेर्भासने अन्यसूर्यसमीहा, उद्योतिताखिलापान्तराले दीपे वाऽन्यदीपवाञ्छा विनान्धितदृष्टीन् भवत्यन्येषाम्। तेषां तु भाऽन्वेपि तथात्वमेव। एवमत्रापि

स्व ऽन्याऽऽभासके आत्मनि नान्यप्रकाशकेच्छाऽनात्मद्रुहाम्। योगशास्त्रकारास्तूचुः स्पष्टमेव-'आत्मानमात्मना वेत्ति मोहत्यागाद्य आत्मनी'-त्यादि। ननु कथमिदं जाघटीति परस्परविरुद्धम् कर्मत्वम् कर्तृत्वम् करणत्वमपादानत्वमधिकरणत्वं चेति चेन्न सप्तभङ्गरहितैकान्तवादाकान्तकृपाणकषितजगत्स्वभावानां पदार्थद्रुहाम्। स्याद्वादिना तु कथञ्चिद् गुणगुणिनो भेदाभेदवादेन स्यादेव युक्तियुक्तमेतत्। यतो द्रव्यरूप आत्मनि ज्ञानरूपेणात्मना सततोपयोगैकस्वभावमात्मानं स्वभावस्थितं स्वरूपरमणं वा निरुपाधितया शुद्धरूप उपयोगात्मा स्यादेवालं वेदने। भवत्येव चायमेव प्रत्ययो विदितविश्वभावाना सर्प. स्वशरीरं स्वशरीरेण स्वशरीरे वेष्टयतीतिदर्शनेन स्पष्टः। स्कन्धादिदृष्टान्तश्च युक्त एव भवतामिव तेषां स्तब्धत्वात् स्वेषां स्वेषु किमपि कर्तुमशक्यत्वात्। न चैतावता सर्वेऽप्येवम्भूता पदार्थव्राता इति प्रत्येति प्रतीतिनिपुण.। न चानवभासकत्व आत्मनो ज्ञानसहस्रेणापि ज्ञानवत्ताप्रतीति.। अन्यथाऽऽकाशेऽपि स्यात्तथाप्रसङ्ग.। न च न प्रतीयत आत्मनि ज्ञानं ज्ञानेनावभासनं तथेति वाच्यम्। यतो ज्ञानवानहमिति प्रतीतिर्नोपायसहस्रेणापि आत्मनः स्वावभासकत्वमन्तरेण प्राप्नोत्यौचित्यपदवीम्। ज्ञानस्यैकस्य तथात्वे चाहमात्मनीत्येव स्यात्प्रत्ययो, न तु पूर्वोक्त। तथैव ज्ञानानवभासकत्वेऽपि न ज्ञानमुत्पन्नमपि जानीयादसाविति कथङ्कारम् जञ्जल्पत्यसौ ज्ञानवानहमित्यज्ञानात्मेवेति। नादर्शनो देदीप्यमानदीपपङ्क्तिमपि प्रत्येति कदापि। न च नार्थो ज्ञानेन तर्हि, स्वान्यावभासकेनात्मनैव तत्कार्यविधानादिति वाच्यम्। स्वज्ञानावभासकत्वेपीतरावभासने तस्य सोपयोगतरत्वात्। मत्या श्रुतेनानुमानेन जानामीत्यादिप्रत्ययादपि स्वीकार्यैवान्यत्रावभासने ज्ञानस्योपयोगितेति न गतार्थता ज्ञानेन स्वपरप्रकाशरूपेणात्मनः स्वान्यावभासकत्वस्येति सुष्ठूक्तम्—'स्वान्यनिर्भासी'ति। स्वभावतः स्वान्यनिर्भासिनोप्यात्मनो नाकारणो भवति व्यापारोऽसौ

यावन्नायं प्राप्तप्रमेयप्रभासनपटुपरमज्ञानपाटव । कथं च तस्य ज्ञानोत्पादकारणसमवाय. समवैति, किमेवमेव 'सर्वभावा. स्वभावेने'त्यादिवत्, किंवा कालेन 'न कालव्यतिरेकेण गर्भबालशुभादिक'मित्यादिवत् । यद्वा-'न कर्त्तारमतिक्रम्य किञ्चिज्जगति जायते' इत्यादिवदित्याशङ्कासम्भवे स्वभावस्य विचित्रत्वाभावात् तत्तद्वैचित्र्यस्यानिबन्धनत्व.पत्ति कालनियत्यादिकमपि तथैवावधार्यापरिमितदूषणपूरपूरितमात्मनो ज्ञानकरणेन्द्रियादिकर्मणां तथैवान्येपामपि व्याचिचिन्तिषव - कर्त्तृत्व प्रतिपादयन्त आहुः-'कर्त्ते'ति । करोति-विदधाति मिथ्यात्वाविरतिकपाययोगादिभिरष्टप्रकारमप्यदृष्टमिति कर्त्ता । न च वाच्यं को हेतुर्मिथ्यात्वादीनामिति । कर्मणोऽनादित्वेन तदसम्भवाभावात्, भवन्ति च कर्माणि पूर्वेपा पूर्वेषा कार्यमुत्तरेषां च कारणमिति । बीजाङ्कुरन्यायेनोपपत्तेर्नानवस्था क्षयङ्करी । यत सैवाऽनवस्था भवेत् क्षयङ्करी, यत्र स्वसिद्धयेऽन्यमन्यमवलम्बते वस्तु । न चेमान्येव न सिद्धानि तदुत्पत्तिविमार्गणे एव पूर्वकर्मपर्यन्तमनुधावन्ति । बीजमपि समधिगत प्रत्यक्षेण कुत उत्पन्नमित्यन्विष्यते तदुपादानं, तदाङ्कुरे, तदुपादानान्वेषणे च बीजे, एवमग्रतोग्रतो भवत्यनुसरणमिति । यथैव च बीजस्यानादिता, तथैव कर्मणामपीति बुध्येय सुधीभि. । ननु च कथमात्मन कर्त्तृत्वं ?, यतो जाघटीति तदहङ्कारस्य, अह करोमिति प्रत्ययात् । यदाह-अहङ्कारः कर्त्ता, न पुरुष । अहङ्कारश्च लाघवख्यातिसौख्यलक्षणसत्त्व दु खक्रियालक्षणरज.-रोपलक्षणतमोरूपत्रिगुणसाम्यावस्थालक्षणप्रकृतिजबुद्धिजन्य । न च वाच्यम् अचेतनस्य तस्य कथ कर्त्तृता ? बुद्धिधर्मत्वात्तस्य, सापि प्रकृतिलक्षणाऽचेतनजन्येति । कः किमाह ? क्षीरादिवद्भवत्येवाचेतनस्यापि कर्त्तृत्वम् । पुरुषस्त्वसङ्गत्वान्नैव कर्त्ता । 'असङ्गोऽय पुरुष' इतिवचनात् । सति चासङ्गत्वे यदि कर्त्तृत्वमनुमन्यते, स्यात्तदा मुक्तानामपि कर्त्तृता । तथाच मुक्तिसंसारयोरविशेष. । न च वाच्य तर्ह्यस्त्वदृष्टस्य कर्त्तृत्वम् यत्तत्सम्बन्ध चेत् पुरुषस्यासङ्गताव्याघात , असङ्गत्वे च न स्यात्तत किञ्चि-

दपि । नह्यम्बु वीजेनासंबं समुत्पादयत्यङ्कुरादीति, उक्तं च-'निर्गुणत्वात्तदसम्भवादहङ्कारधर्मा ह्येते' । न च वाच्यं सम्बन्धाभावे प्रकृत्यात्मनोः कथं स्वस्वामिभावः ? इति अदृष्टस्य तन्निमित्तत्वे नाश्रयणाद् । यद्वाऽविवेकादेव तत् । यत. सति विवेके प्रकृत्यात्मनोर्न किमपीति चेत् । उच्यते-प्रकृतिर्नित्या अनित्या वा ? । आद्ये, बुद्धयादीनां कथमिवोद्भवः ? । नह्यनुपादानस्य पूर्वावस्थाऽपरित्यागे भवत्युत्तरावस्था । सत्कार्यत्वं तु प्रयासानर्थक्य-क्रियाव्युपरम-व्यपदेश-तत्कार्याभावादिनाऽनुचार्यमेव । तन्न स्वनीत्या तत्सम्भवोऽपि, कुतस्तत्कर्त्तृता । अन्त्यस्तु नाभ्युपगम्यत एव । अभ्युपगमे वा कादाचित्कत्वाद् भाव्यं तन्निमित्तेन । तथा चायात आत्मैव निमित्तम् । अन्यच्च-प्रकृतिरात्मसम्बद्धा कुर्यात् किमप्यसम्बद्धा वा ? । आद्ये, असङ्गत्वव्याहतिः स्पष्टैव । अन्त्ये. न कार्यलेशस्याप्युद्भव. । अन्यच्च-अहमिति पुरुष. प्रवक्ति तदन्यो वा ? । पुरुषश्चे त् स्वसिद्धान्तविरोधः ।

प्रकृते. क्रियमाणानि, गुणैः कर्माण्यनेकश ।
अहङ्कारविमूढात्मा, कर्त्ताहमिति मन्यते ॥१॥ इति

श्लोकवृत्तिसदसत्कर्मवाचकायाः प्रकृतेः कल्पितप्रकृतिवाच्यतां स्वीकृत्य यदि चोच्येत प्रकृतिजन्योऽहङ्कार एवाहमितिचेत्, नन्वहं जानेऽहं भुनज्मि मुक्तश्च प्रकृतेर्भवामीति पुरुषस्य मन्यतेऽहंताऽन्यस्य वा ? । आद्ये, को विरोधोऽत्र । अन्त्ये, प्रकृतेर्भोगाश्रयता चिदात्मकता प्रकृतियोगपरिजिहीर्षा चापद्येत । प्रतिबिम्बोदयेनैव भोगादिरिति चेत्, नामूर्तस्य प्रतिबिम्बादि । आकाशवच्चेत्; नैतदमूर्त्तस्याकाशस्य, किन्तु तद्वृत्तिप्रभादेः, अन्यथाकाशस्यापि साकारत्वाभ्युपगमापत्तेः । अन्यच्च-त्वन्मतेन विभुत्वादात्मनः सर्वेषां भवेयु प्रतिबिम्बानि । असङ्गस्यामूर्त्तस्य प्रतिबिम्बभावे तु स्यात् मुक्तानामपि प्रतिबिम्बता । अन्यथा स्यात् प्रकृतिमतां सम्बन्धेन मूर्त्तता बलात्कारेणापि । अन्यच्च-सर्वव्यापिन आत्मनो नित्यायाः प्रकृतेर्वियोग. कथं भवेत् ? ।

पुरुषविशेषमनुश्रित्य ज्ञेयम्। सापेक्षाश्चाभ्युपगम्यन्ते श्रुतयो भवतापि। अद्वैतप्रतिपादकानां यथा वैराग्योद्देश्यता ज्ञा[न]मित्यादेश्च प्रकृत्युद्देश्यतेति सुष्ठूक्तं—'कर्त्ते'ति। अहं भुनज्मीतिवदहं करोमीति निर्बाधप्रत्यय-भावात्। आत्मकर्त्तृत्वादेव च भावलक्षणमनुसृत्य करण तीव्रमन्द-कर्मबन्धादि तदुदयादि च युक्तियुक्तम्। यथाहि-अनुभूता स्मर्त्ता, अननुभूतस्याननुभावकस्य वा स्मरणाभाव। एवमध्यक्षं सुख-दुःखादिवेदनद्वाराऽबाध्यानुभवेनानुभूयमाना भोक्तृता न कर्त्तृता-मन्तरेण सम्भवेत्। सम्भवे चाकृताभ्यागम-कृतनाशापत्ति दुर्वारैव। अधिष्ठातृत्वं तु स्वरूपेणाध्याहावेन यथा कर्तृतायां तथा भोक्तृताया-मिति समानमुभयत्रापि। नहि सर्वथैवानादृष्टस्यात्मा जडीभावमापद्यते। नहि सुवर्णं मलयुक्तं न तत्सुवर्णं, जहाति वा सुवर्णताम। कर्मणां चाचे-तनत्वेपि प्रकृतिवच्चेतनावदधिष्ठितत्वेन स्यादेव गत्यन्तरादि, भवन्त्येव च चेतनाधिष्ठितानि शरीरादीन्यचेतनान्यपि क्रियाकर्तृणीत्यलमति-प्रसक्तेनैतेनाधुनेति। न च वाच्य प्रमातृलक्षणमेतत्, प्रमाता चानु-समयं समालोकितसकलवस्तुस्तोमत्वात समस्तशुभाशुभसमूलकाषङ्क-षक सिद्धोऽपि भगवान्, अनन्तचतुष्टयसम्पन्नत्वात्तस्य। न चासौ क्षीणाशेषक्लेशत्वात सुकृतदुष्कृतलवस्यापि विधायकः। तथात्वे च पुन-रावृत्तिप्रसङ्गात्, न चावृत्तिरस्य, साद्यनन्तत्वात्तस्य। उक्तं चान्यत्रापि-'न मुक्तस्य पुनर्बन्धयोगोप्यनावृत्तिश्रुतेः। अपुरुषार्थत्वमन्यथा। अवि-शेषापत्तिरुभयोरि [सां॰]त्यादिना तदव्याप्तमेतद्। अत्र तु वने केचिद्युत-संसारिजीवापेक्षमेवैतल्लक्षणम। ते च सर्वेऽपि कर्त्तार एव शुभाशुभानां कर्मणां, कैवल्यानन्तरावाप्तकेवलकेवलवेदसोऽपि बध्नन्त्येवादृष्ट सात-वेदनीयम्। व्याप्तिश्च शुभाशुभान्यतरबन्धेन, नोभयेन। तथाप्रकार-जीवाभावेनासम्भवादेव। यतो नास्त्येव शुभाशुभरूपो मिश्रो बन्ध इत्यन्यदेवैतत्। एतदपि सव्यवहारार्हजीवापेक्षमेव। यतो वदयन्त्यन्ते-'सर्वसंव्यवहर्त्तृणां प्रसिद्धापि प्रकीर्त्तिते'ति। ततो नायोगिन्यव्याप्तिर-बन्धकेपि 'अवधगु अजोगि' त्तिवचनात् इति। अन्ये तु व्याचक्षते—

यत्कर्तृत्वमात्र विवक्षितम। तेन न क्वापि व्याप्तिविरोध । भवगानां भवकारणादृष्टानां कर्तृत्वात्। सिद्धार्थानां श्रीसिद्धभगवता तु स्वगुण-कर्तृत्वात्। नह्यक्रियस्य सर्वथा भवन्ति ज्ञानादयोऽपि गुणा निश्चयेन तत्कर्तृत्वैवात्मलक्षणभूता। अयोगिनोप्येवं नाकर्तृता, या कर्माण्य-पेक्ष्याकर्तृत्वात् सव्यवहारातीतत्वेन समाहिता परं । एवमेव भोक्तृ-ताप्यग्रे वक्ष्यमाणावबोद्धव्या । परमेतावद्विशेषो—यदुत—अयोगिनि भोगोऽस्त्येव सुकृतदुष्कृतान्यतरस्येतरससारिजीववत्। तत्तेपि व्या-वहारिकभोक्तृगणान्तर्गता गण्यन्ते। न विरोधलवोपीति। तत्त्वतस्तु नैतत्समग्रं लक्षणावच्छेदकया प्रवेशितं सूरिभि, अन्यथा का गति-

य: कर्त्ता कर्मभेदानां, भोक्ता कर्मफलस्य च।
ससर्त्ता परिनिर्वाता, सह्यात्मा नान्यलक्षण ॥१॥

इत्यादिव्याख्याने। किन्त्वन्येषां कुनयमार्गानुसार्यभिमतजीवस्व-रूपाणां व्यवच्छेदेन जीवस्वरूपाविर्भावनाय। अन्यथा प्रमातृत्वमात्र-मेव लक्षणमुपयोगो लक्षणमिति वचनवत् । यद्वा—व्याप्यं लक्षण-मेतत् । न चास्ति नियमो व्याप्यनिवृत्तौ व्यापकनिवृत्त्याऽवश्यं भाव्यम्। नहि यत्र न धूमो न तत्र कृशानुरित्यस्ति व्याप्ति । धूम-सद्भावे त्ववश्य भाव्यं हिरण्यरेतसा। एवमत्रापि। न यावज्जीव कर्तृता-नियम किन्तु व्याप्यत्वाद् यावत्कर्तृ जीवत्वमित्येव। तथाच लक्ष्यते-प्रज्ञायते, लक्ष्यमनेनेति लक्षणमिति व्यवच्छेदार्थकतया लक्षण-शब्द उन्नेय:। न चास्त्यजीवानां कर्तृत्वादि, येन व्यभिचारि स्यादेतत्। तद्वद् वाच्यवाचकवाच्यतावत्त्वं वावसेयमिति । न च केवला कर्तृता, किन्तु भोक्तृतापि, यदुक्तम् अन्यैरपि—

कृतकर्मक्षयो नास्ति, कल्पकोटिशतैरपि।
अवश्यमेव भोक्तव्यं, कृत कर्म शुभाशुभ ॥१॥ मिति।

पारमर्षेपि'कडाण कम्माण न मोक्खो अत्थि अवेइअत्ता अनिजि-

णइत्ते' त्यादि। तत्कृतानां कर्मणां भोक्तृताप्रतिपादनायाहुः भोक्ते 'ति। भुनक्ति-कृतमनुभवतीति भोक्ता । उभयपदोऽयं। यद्वा-भुङ्क्ते-धातूनामनेकार्थत्वाद् 'भोगोऽयं पदातिमें' इति दर्शनादनुभवति विपाककाल इति भोक्ता-अनुभविता। यद्वा-अस्त्वभ्यवहार एवार्थः। यावत्कर्मणामनुभवनियमादेव । न च वाच्यं कर्त्तृत्वग्रहादेव गतार्थमिदं, नार्थोऽनेनेति। यतो नैहिकपारलौकिकभेदेन भिन्नैव कर्त्तृता भोक्तृता च। नहि नियमोऽस्त्येष यदुत-यदा कर्त्ता तदैव भोक्ता, किन्तु कालान्तरे भवान्तरे वेति ज्ञापनाय। यद्वा-य एव कर्त्ता स एव भोक्ते ति दर्शनेनैकान्तनित्यानित्यत्ववादिनौ शिक्षयति, यदुत-नैकान्तनित्यत्वे एकान्तानित्यत्वे वाङ्गीक्रियमाणे युज्येते कर्त्तृताभोक्तृते । किन्तु कथञ्चिन्नित्यानित्यतया जात्यन्तरगते एवोभे एते। यतोऽवस्थाभेदो हि भेदकोऽवस्थावत.। नहि घटो नष्ट इत्यत्र घटतया परिणत द्रव्य नष्टं, कपालोत्पादस्याऽऽकस्मिकत्वापत्तेः। किन्तु कपालावस्थोत्पन्ना घटावस्था च नष्टा। न च मृद घटकपालौ भिन्नावेव। तथात्वे निर्द्रव्यतापातादाकृते., किन्तु भिन्नाभिन्नावेव । विवेचितं विस्तरेणैतत्पूर्वम् । किञ्चैकान्तनित्यानित्याना नैव युज्यतेऽर्थक्रियापि । यतो नित्योऽनित्यो वा क्रमेणार्थक्रियां कुर्याद्युगपद्वा ?। नाद्येन, यतोऽस्य तथाकरणे किं कारणं ?, कारणापेक्षेति चेत्किं कारणेनान्तर्गडुकल्पेन । क्रियते अतिशयापादनमिति चेत्, स्पष्टैवाहितातिशयतयाऽनाहितातिशयतया च भिन्नता तद्द्रव्यत्वेनाभिन्नता च। क्षणे च नैव क्रम एव। न च नित्ये एकान्तेन तद्रहितस्य तद्वत्ता अनित्ये चावस्थानाभावात्तद्वत्ता भवेदिति। युगपच्चेद्, द्वितीयक्षणेऽकर्त्तृत्वात् स्पष्टोऽवस्थाभेद. नित्यैकान्तस्य। अनित्यैकान्तस्य तु द्वितीयक्षणे निरन्वयविनाशस्य प्रत्यक्षविरुद्धस्याभ्युपगमे न स्मरणादि । न चार्थक्रियैव घटते तावदेकान्ते, यतो ज्ञातृत्वकर्तृत्वानुभवितृस्मर्त्तृत्वादीनां भिन्नकालीनत्वमेककर्त्तृत्व चानुभूयते एव । न चेदं तथाऽभ्युपगमे । नहि यदेव

सम्भवत्यपि । यतो 'गुणपर्यायवद्द्रव्य'मित्युच्यते । गुणपर्यायाश्च स्थिरीभूते द्रव्ये एव उत्पद्यन्ते । न च द्रव्यमपि सर्वदा समानरूपम् ।

यतः-सर्वव्यक्तिषु नियतं क्षणे क्षणेऽन्यत्वमथ च न विशेष ।
मृद्भावाद्यनुवृत्तेराकृतिजातिव्यवस्थाना ॥ १ ॥ दिति ।

समक्षमनुभवात् । यदि च न स्यात परिणामो द्रव्यादीनां, कुतस्तरां प्रतिक्षण विविधकार्यकरणशक्तिसमुत्पाद । सत्येव च परिणामे स्मरणप्रत्यभिज्ञानादीनि भवन्ति । यतः पूर्वकाले यो ज्ञाता स एवाग्रतो यद्यज्ञातृत्वावस्थ. तद्धर्मत्वाश्रित्य भवेत्तदा स्मर्त्ता, ज्ञातृत्व-स्मर्त्तृत्वयोर्विरोधात् । नहि यद् यदा ज्ञायते तदा तस्य स्मरणं संविद्यते । न च ज्ञातृत्वस्मर्त्तृत्वयोरैक्यम्, एकस्येन्द्रियादेरुद्भवाद-न्यस्य च संस्कारादेरुद्भवावलोकनात । न चाननुभविताऽननुभूत वा स्मर्यते केनापि किमपि । अन्यथा सर्वस्य सर्वानुस्मृतिप्रसङ्गात् । अनुभवसिद्धं च स्मरणमिति नापरिणाम्यात्मा । अवस्थाद्वयविरोधो नित्ये, एककर्त्तृकत्वविरोधश्चानित्ये सर्वथा । न च ज्ञानस्यैव भिन्नत्वं तेनेति । यतो न केवलं ज्ञान ज्ञातृत्वेनोच्यतेऽस्ति वा । न च ज्ञान-विशेषेण विशिष्टता [न] जीवस्य ज्ञानस्य साश्रयत्वादाधेयभेदे वाधार-तापि तन्निरूपिता भिन्नैव । न चाधारताऽऽधाराद्भिन्नेति, भिन्नभिन्न ज्ञानानामधिकरणताप्रयोजको भवत्येकस्वरूप आत्मा कथम् । न चान्य-स्मिन्नात्मनि भवेन स्मरणादि, पूर्वोक्तातिप्रसङ्गस्य जागरूकत्वात । न च द्रव्यस्यास्ति सर्वथा विनाशेऽर्पण-याचनादिव्यवहार । अयं गुरुः सोऽन्तेवासीत्यादिव्यवहारस्याध्यक्षसिद्धत्वं तूभयोरपि । स च प्रत्यभि-ज्ञानोत्पाद्य एव । न च युज्यते सर्वथा नित्येऽनित्ये वैतदिति सर्वाकार्यः परिणाम्यात्मा । न च भवान्तरगमो युज्यते अपरिणामिन्यात्मनि, जीवत्वेनावस्थानान्नरादित्वेन विनाशाच्च । न चोभयोरेकताभावेऽपि भवति युक्तिसङ्गतं तद्गत्यन्तरादि । स्पष्टश्च मनुष्यत्वादेरभावो देवत्वे, नरत्वे च देवत्वाभाव । न चाऽन्यो जीव उत्पन्नो, वीतरागजन्मा-

दर्शनन्यायेन तस्यानादितया स्त्रीकरणीयत्वात् । उत्पादे वा स्पष्टैव पूर्वस्य कृतस्याफलता उत्तरस्याकृतस्याप्यभ्यागमता च । एवं हिंसाद्यहिंसादि च व्यर्थमेव । न च धनादि यथा पुत्रादेरुपयोगितामेति, तथा सन्तानस्योपयोगितामेष्यति हिंसादिजन्यादृष्टमिति वाच्यम् । सन्तानस्य भिन्नाभिन्नत्वकल्पनया सन्तानिभ्योऽयुज्यमानत्वादुभयथापि भवत्कल्पनया, अन्यथा सन्तानस्य परिणामितापात । सन्तानस्यापि च क्षणिकत्वं न कथ ?, तस्यापि सत्त्वाविशेषात् । सन्तानिरूपत्वे चानर्थक एव सन्तानाभ्युपगम. कल्पितश्च । न च तथा भवेद्वासनासङ्क्रमादि । न च वासनासङ्क्रमो युक्तो द्वयोः क्षणयोः, तुलोन्नामावनामादिवच्चेन्, नैतत्पर्यालोच्य भाषितम् । न हि तुलाद्वयस्यैककालीनतावदस्ति द्वयोः क्षणयोरेककालीनता, येन युक्तो भवेद्वासनासङ्क्रमः । नित्यवादे तु न नरादिभवनाशो देवादिभवोत्पादो वा युक्त । एकस्मिन् विरुद्धत्वाद्, द्वयोर्विरुद्धधर्माभ्युपगमे च स्पष्टः स्याद्वादाभ्युपगम, पूर्वापरावस्थाभ्युपगमेन परिणामित्वाभ्युपगमश्च । यत सति चैकस्मिन् जीवेऽनेकावस्थाभावेन कथमिवैक्यं भवेत् । ननु प्रमातृत्वादियुक्त आत्मा विचार्यते विचारवद्भिर्भवद्भि, परमविचारितमेवैतद् । यतः सति धर्मिणि धर्माश्चिन्त्यते, नाऽसति । धर्मी च भवदभिमतो जीव. । स एव च नास्ति यदा, तदा का तस्य प्रमातृत्वादिचिन्ताकणिकापि ? । न चालीकमिदम् । यत. प्रमाणाधीना हि प्रमेयव्यवस्थितिः । न हि प्रमाणातीतमभ्युपगम्यते सद्भि । प्रमाणातीतश्च जीवः । यतोऽसावभ्युपगम्यमानो भवद्भि केन प्रमाणेन परिच्छिद्याभ्युपगम्यते, प्रत्यक्षेणेतरेण वा ? । आद्येन चेत् । तन्न चारु, हृषीकाणि हि स्वस्वविषयेपु रूपरसगन्धस्पर्शशब्देपु नियतानि । न च तद्वानात्माभ्युपगतो भवद्भि । योगिप्रत्यक्षेण वेविद्यते चेत्, तत् केन प्रमाणेन भवद्भि. प्रमितं ? यत्तैः प्रत्यक्षेण ज्ञातो जीवः । प्रत्यक्षेण तावन्नैव, विनष्टानुत्पन्नस्य ह्यग्राहकत्वादिन्द्रियाणाम् । न चेतरदस्ति मानं, यतो ज्ञायेत तत् । आगमस्त्वधुनाऽऽ-

न्दोलायमानप्रामाण्य एव। न चास्त्येव मानसं प्रत्यक्षं प्रतिप्राणि-सिद्ध, येन सुखदु खाद्यभिगमः तेन चात्मावगमो भविष्यतीतिवा-च्यम्। तथा सति विप्रतिपत्त्यभावात्। नहि प्रत्यक्षावगम्ये भवति विवादः। यथा प्रत्यक्षेषु भूतेषु। विद्यन्ते चात्मसत्ता-तद्व्यापकतैक-ताऽकर्त्तृत्वादिविषयेषु विप्रतिपन्ना अनेके। तन्नासौ प्रत्यक्षसमधि-गम्य.। न च प्रत्यक्षेतरद् विद्यते प्रमाणं, विसंवादित्वात् शेषा-णाम्। तथात्वेपि तत्प्रामाण्येनानुधावनं चेद् भविष्यत्येव विनिपातः।

यदाह—हस्तस्पर्शादिवान्धेन, विषमे पथि धावता।
अनुमानप्रधानेन, विनिपातो न दुर्लभः॥ इति॥

किञ्च-अनुमानेनापि प्रत्यक्षेतररूपेण कथं गृह्येतासौ ?। यत इदं गृहीतलिङ्गसम्बन्धे भवेदन्यथा वा ?। नान्त्यं, तथात्वमेव नानुमानस्य। सिध्येच्चैवं तु यत्किमपि शशशृङ्गादि जीवा-भावाद्यपि च। आद्ये तु न कदापि जीवः प्रत्यक्षगोचरमागतो, येन तत्सम्बद्धलिङ्गग्रहोन्यथानुपपत्तिश्च निर्णीयेत। अभावे च तयो कथमिव भवेदनुमानप्रथा। यतो नह्यदृष्टवह्निधूमस्य धूमस्य लिङ्गत्वेन वह्न्यन्यथानुपपन्नतया वा ग्रहो भवति। तन्नानुमानमेयः प्रमाता। आगमोपि परस्परविसंवादितया कथमिव स्वप्रामाण्यं ख्यापयेद्, येनात्र स स्यात् प्रमाणीभूत। न चाप्रमाणेन सिद्धि कस्यापि, अन्यथा सर्वसिद्धिप्रसङ्गो दुर्वार एव स्यात्। न च पुरुषप्रणीत एवागम प्रमाणतया जागद्यते, न चासौ विसंवादि, दृष्टेष्टाव्याहतरूपत्वात्त-स्येति वाच्यम्। यतस्तस्य पुरुषविशेषस्य सिद्धिरेव तावत्कुतो ? न प्रत्यक्षेण, तस्य वर्त्तमानमात्रग्रहणनिपुणत्वाद्। अनुमान-मपि (नानुमानेन) प्रत्यक्षपूर्वकत्वात्तस्य। आगमेन साधने तु स्पष्ट एवान्योन्याश्रयः। पुरुषविशेषसिद्धावपि जिनेन्द्र एव सर्वज्ञो, बुद्धो नेत्यत्र का प्रमा ? द्वयोराप्तत्वभावे च किं विरोधोऽनयोर्मते ? इत्यादे-श्चर्चनीयत्वात्। उपमानं तु नाप्रत्यक्षे विषये सङ्क्रमते। दृश्यमान-

गवयस्य गोसदृशत्वाधिगमे हि स्यादुपमानम्। न चात्र तथेक्ष्यते। अर्थापत्तिस्तु नानुपपन्नोऽर्थो जीवमन्तरेण समस्ति। यतस्तं कल्पयेत्। चेतना तथाभूता चेत्। न, तस्या भूतजन्यतया भूतविलयतया च प्रत्यक्षीक्रियमाणत्वाद् भूतधर्मतौचित्यात्। दृश्यते च क्षीरादिभ्यो बुद्धिवृद्धिर्मद्यादिभ्यो हानिश्च तस्याः। यदीयं स्यादात्मगुणरूपा, नैवाभविष्यतामेवं वृद्धिहानी। न चाभावस्तत्सत्तासाधकः, तस्य प्रतिषेधपरायणत्वात्। सम्भवैतिह्यादीनि च नाविसंवादीनि। तथात्वेऽपि च भिन्नतयाभिमतानि भवद्भिरास्तिकैः। न च सन्ति भिन्नानीत्यतो नास्त्येव जीव इति निर्णेयम्। असति च जीवे प्रमातृत्वादिप्रतिपादनं वाचाटतामेव व्यनक्ति वावदूकस्येति। प्रतिविधीयतेऽत्र—स्वस्थो भव, प्रथममुच्यतां तावद् भवता यदुत-कोऽयं निषेधकः? केन वा मानेन निषेधयत्यमुं?। प्रथमं तस्य वचनस्य प्रमाणत्वे आगमप्रामाण्यापातोऽन्यथा चानिषिद्धा जीवसत्तेति तथाहि-न तावद्वाच्यं भूत इति। तस्य जडत्वेन निषेधकत्वाभावात्। सति च जडानां निषेधकत्वे, न कथं भवानपि निषिद्धो भविता?। अपि च भवतां जडरूपता केन साधिता? न तावत् प्रत्यक्षेण, वक्तृत्वेनैव भवतोऽप्रत्यक्षत्वात्, न च केनापि हृषीकेण, भवता पूर्वं जडाना वक्तृत्वमवलोकितं, येन ब्रूयाज्जडो वक्तेति। कुरु मौनं, प्रथमकवल एव मक्षिकापातं सम्पादय। न च प्रत्यक्षेणाधिगतो जीवाभावः, तस्य प्रवर्त्तकत्वादेव सिद्धिः स्याज्जीवस्य, न त्वभावः। न च वाच्यं प्रत्यक्षाभावाज्जीवाभावोऽवगम्यते इति। यतो न तावद् भवत उत्पत्तिरेव भवतः प्रत्यक्षा, कुतस्तरां मातापित्रादि। तथा च भवान् नोत्पन्न एव, अनुत्पन्न एव च वक्तेति महच्चित्रम्। न चामातापितृकस्य भवतः सम्मूर्छनजस्येव विचारकणिका युक्तोद्भवितुं, येन निषेधनं कुर्यात्। कथं च क्षुत्तुदुपशमादीनां प्रत्यक्षाधिगम्यत्वाभावेऽपि यतते भोजनाय?। न चास्ति नियमो यदुत— प्रत्यक्षं निवर्त्तमानं निवर्त्तयति वस्तुसत्ताम्। अन्यथा जीवाभाव एव नैन्द्रियक इति सोपि नास्त्येव, नास्ति च वाक्यमपि, भवतो

विनष्टत्वेनाप्रत्यक्षत्वात्। तत् कस्य निर्वचनं वाञ्छसि। अनुमानादि च नैवाभ्युपगम्यते भवता स्पष्टम्। अथ न नैवाभ्युपगम्यते सर्वथा, किन्तु यद् यथार्थं वह्न्यादिज्ञापकानुमानादिवद्, चिरं जीवतु। तथासति न नियमो यदुत-प्रत्यक्षमेव प्रमाणं, नानुमानादि। किन्तु यदेव प्रमेयाव्यभिचारि, तदेव प्रमाणम, पर चाप्रमाणमिति। न च वाच्यं प्रत्यक्षमविसंवाद्येव, अनुमानादिकं तु न तथेत्यप्रमाणतोद्घोष्यतेऽस्य। यतोऽध्यक्षं दृश्यते मरुमरीचिकाजलावभासप्रत्यक्षादीनां व्यभिचारिताऽनुमानादीनां च बहूनामव्यभिचारितेति न भ्रान्तव्य भ्रातर्भवता व्युद्ग्राहणया। न चास्त्यनुमानाद्यपि निषेधकं जीवस्य। यतो वक्तुं शक्यमत्रापि, यत्र जीवाभाव प्रत्यक्षं, कथं तद्वा तत्प्रतिबद्धलिङ्गाग्रहणादनुमानादीत्येवं सर्वं भवदुक्तमवतारणीयमत्र जीवनिषेधेपि भवतैव। न खल्वयं सतामस्ति न्यायो, यदुत-पराभिमते एव प्रमाणान्वेषणा, न स्वानुमते इति। पर्यनुयोगपराण्येव सूत्राणि वाचस्पतीनामिति त्वनभिमतभावाभावोभयस्यैव युक्तमवलम्बयितुमन्यथावलम्बने तु स्पष्टैवार्धजरतीयन्यायानुसृतिः। अन्यथा भवतां स्थापनाहीनपक्षवादित्वेन विकटैव वैतण्डिकता। प्रश्नमात्रसूत्रप्रणेतॄणां तु 'कायाकारपरिणतसमुदाय पुरुष' इत्यपि वचनं न भवतामागमाप्रामाण्याभिमन्तॄणामभिमतसिद्धये। यतः स एवाभिधाताऽभिधाता स्ववचनाप्रामाण्यम्। तथाच स्वतो व्याघातितस्वप्रामाण्यस्य कथ भवेत् प्रामाणिकभाव ?। यच्चोक्त निषेधयता प्रमातृत्वादिविशिष्टं जीवं यत् 'प्रमाणाधीने'त्यादि। तद् युक्तमेव, किन्त्वसिद्धमेव जीवस्य प्रमाणातीतत्वभणनम् यतो, यत्तावदुक्तं-'केन प्रमाणेने'त्यादि। तत्र ब्रूमो-यत्सकलप्रमाणज्येष्ठेन प्रत्यक्षेणैव तत्सत्ताऽवगम्यत एव, किमन्यमानगवेषणया ?। नहि मुधा लभ्यन्ते यवाश्चेत् क्रीणीरन् कोपि तान्। अहमिति प्रत्ययः सर्वेषां स्वानुभवसिद्ध एव। न च कोऽपि ब्रूयादेवं यदुत-अहं मां न जानामि। तथा च नाऽहंप्रत्यये विप्रतिपत्ति। न च वाच्यमहं गौर इति भवत्यहंप्रत्यय. शरीरगोचरोपि,

तत्कथं नासावपि भवेत्तद्गोचरः ?। सत्यं, तादृशोस्ति, परं गौरं मे शरीरमिति भेदेन तदर्थभूतप्रत्ययस्य दर्शनादवितथतया प्रतीयते, यदुत-य एवाहंप्रत्ययगोचरः कोप्यस्ति शरीरे, स एव प्रागुपचर्य प्रोक्तोऽहंपदेन। अन्यथाऽत्र षष्ठ्या भेदेन निर्देशो नैव भवेत्। अन्यच्च अहं ज्ञानवानिति प्रत्ययेन ज्ञानाश्रयस्यैव कस्यचिद्वाचकोऽयमहंप्रत्यय इति स्वीकार्यमेव। न च भवति कदाचिदप्येवं प्रत्ययो यदुत-अहं ज्ञानमिति, येन चैतन्यस्य भवेदहंप्रत्ययवाच्यता। स चोत्पद्यते भूतेभ्यो ज्ञानाश्रयो 'विज्ञानघन एवे'त्यादिवचनादिति त्वन्यदेव। विचारयिष्यामोऽग्रे तदपि। न च मनः प्राणो वाऽहंप्रत्ययग्राह्य, तस्य मे मनो मे प्राण। इति प्रत्ययेनालीकत्वस्य स्पष्टं निष्टङ्कनात्। न च वाच्यं मे आत्मेति प्रत्ययादपि तदहंप्रत्ययग्राह्योऽन्य एव स्वीकार्यं। यतो न शरीरे एकस्मिन्ननेका आत्मानः प्रतिपद्यन्ते, प्रतिपत्तौ वा नान्योन्यमहं ममेति वाच्यता वा स्वीक्रियते। आत्मानेकस्वाभावेऽपि तस्यैकस्याप्यात्मनः पूर्वापरपर्यायभेदेन ज्ञानादिगुणेन वा कथञ्चिद्भिन्नाभिन्नत्वावगमात्। न चाहंप्रत्ययान्न भवन्ति सुख्यहं दुःख्यहं ज्ञान्यहं जानेहमित्यादयः प्रयोगा व्यवहारविषयगता। तथा च ज्ञानसुखदुःखाश्रयः कश्चिच्छरीरमनःप्राणव्यतिरिक्तः स्वीकार्यः। इन्द्रियाणां च स्पष्टैव न तद्गोचरता, तदपगमेपि तद्दर्शनात्। पश्चाज्जातबधिरभावोऽपि वक्त्येव विचारकवृन्दस्याग्रेपि – यदहमश्रौषमिति। तद्वदितरेन्द्रियाणामपि। न चेन्द्रियादिसमुदाय उपचरितोऽयं प्रत्ययो, धान्यसमुदाये खार्यादिमानवत्। तथात्वे सर्वेषामहं स्वामीति न भवेत् सर्वस्वत्वस्वस्वामित्वदर्शकोऽहंप्रत्ययः। आत्मनश्च प्रतिप्राणि स्वानुभवसिद्धत्वादेव च 'केनासौ गृह्यते प्रत्यक्षेपीन्द्रियादिने'त्यादिकल्पनमयुक्ततरमेव। वक्तु वा 'वादी भद्रं न पश्यती'तिन्यायेन तथापीन्द्रियज्ञेयविषयाभावेपि सुखादीनां मनोगम्यत्वात् मानसप्रत्यक्षेण तद्ग्राह्यतायां को विरोधः ?। यतो मन आत्मना संयुक्तं यदि स्यात्तर्ह्येवार्थप्रकाशकतामवाप्नोत्यात्मा। यद्वा-

ज्ञानस्य स्वपरप्रकाशकत्वात् प्रकाशयतु तदप्यात्मानम्। तत्त्वतस्त्वात्मैव स्वपरप्रकाशकः, येनाहं मनोयुक्त इत्याद्यपि प्रादुर्भवदवेक्ष्यते ज्ञान, तन्न विरोधमधिरोहेत्। स्वपरिमाणमप्येव सति ज्ञेयं स्यात्, महच्चित्रमन्यथा, यत्स्वय स्वपरिमाण न वेत्तीति चेत् कः किमाह ?। तेभ्य उपालम्भ एष, येऽनुभवापलापपापपूरप्रचुरमलीमसात्मानः शरीरमात्रतां न स्वीकुर्वतेऽध्यक्षसिद्धामात्मन.। वय त्वभिदध्महे-यच्छरीरमानोयं जीवो, वक्ति च स्वयमपि यदुत-नखशिखान्तमहमेवेति। अत एव वक्ष्यन्ति सूरिपादा यत्-'स्वसवेदनसंसिद्ध' इति। यच्चोक्तं-'नाध्यक्षसिद्धे विप्रतिपत्ति'स्तदपि न विचारितम्। यतोऽस्त्येवाध्यक्षसिद्धेप्यध्यक्षापलापपातकिनां वेदान्तिनां शून्यवादिनां च भूतसमुदाये विप्रतिपत्ति., नैतावता तानि न सन्ति। न चाध्यक्षसिद्धेऽवयविनि स्थाऽर्णा च पदार्थे न क्षणिकत्वाद्यादीनां न विप्रतिपत्ति', अस्ति चेत्. किमु भूतसत्तावयवित्वादि [किमिति] स्वीक्रियते भवतालीका चेत्तेषां विप्रतिपत्तिस्तदा किं नात्र विचार्यते। तथा चेतना चेदनुभवसिद्धा, जीवा अपि तथैव, यथा घटरूपादीनां प्रत्यक्षाद् घटादयोऽपि व्यवह्रियन्ते प्रत्यक्षा इति। न च रूपाद्यन्तराऽन्यत् किमपि द्रव्यमवलोक्यते। तद्वदत्रापि ध्येयं निमील्य नेत्रे बोद्धृभि.। यदवादि च-'न प्रत्यक्षेतराणां प्रमाणत्व'मित्यादि। तदप्यविचारितरमणीयम्। यतो भवता केन तदप्रामाण्यमधिगतम्। न प्रत्यक्षेण, तस्य प्रवर्त्तनामात्रपरायणत्वात्। विसवादाच्चेन्मानसमेवैतत्समालोचनं परोक्षं च तदिति स्पष्ट एव व्याघातो वदता भवतामेवम्। न च परैरभिमतमितरत्तत्प्रमाणतयेत्युच्यते इति वाक्यं वचनीयम्। यतो भवता तस्यानुमानस्येतरप्रमाणाप्रामाण्यव्यवस्थापकस्य प्रामाण्यमभ्युपगम्यते न वा?। आद्ये, प्रकटैवापन्ना बलात्कारेणाप्यनुमानप्रामाण्यता। अन्त्ये च, न निषिद्धं स्यादेवं प्रामाण्यमनुमानस्येत्यायातो 'न निषिद्धमनुमत'-मितिन्यायेन तत्रैव। कथं च नैवमाप्नोसि प्रामाणिकपर्षदि निग्रहस्थानम्?, परपक्षानुमते- 'प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते' आयाता।

सा च निग्रहस्थानमेव। अनिराकरणेऽपि चानुमानस्य स्यादेव तद्-व्याप्तिः। यत प्रामाणिकसमयोयं यदुत-विज्ञातस्य परिषदा त्रिरभिहितस्याप्रत्युच्चारणम्। पराभिमततयोच्यमानमपि न प्रेक्षाकारिणा-मर्हति योग्यताम्। नहि कोप्यज्ञो मनुते गुड विषतयेति तन्मारणे-प्सुना विदुषापि तस्मै दीयते गुडो, विष वाऽमृततयाध्यवसितमिति तत्पुष्टये दीयते विषम्। तद्वदत्रापि यदि परेणाप्रमाण मप्यनुमान मौढ्या-त् स्वीकृत प्रमाणतया, तर्हि भवद्भिरतिप्राज्ञैरपि स किं ते न पथ्यवता-रणीय। भवद्भि कथं स्वीकृताऽनुमानादेस्तह्य प्रमाणतेति त्वन्यदेव परावर्त्तनीय स्यात् पुनः। न चानुमानाद्यप्रामाण्ये युक्त वक्तुमपि भव-ताम्। यतो नह्यनभिसन्धाय पराभिप्रायमुच्यमान वाक्यं वचनीयता-मतीत्य भवत्यन्यस्मै कस्मैचिदपि लाभाय। न तथाऽनूचानो लभते च प्रवरपर्षत्पारिषद्यताम्। पराभिप्रायश्चानुमानेनैव लक्ष्य.। यतो 'नेत्रवक्त्रविकारैश्च लक्ष्यतेऽन्तर्गतं मनः' इत्युदाहृतमेव नीतिनिपुणेन। अनभिसन्धायैव चानुमानोत्सर्जनाद्वाच्यं भवद्भिर्वाक्यमपि पराभि--प्रायम्। न च तद्युक्तमिति। अवोचन् च कोट्यात्मकग्रन्थग्रथनगरि-ष्ठयश.पुरवपुष्का-

विनानुमानेन पराभिसन्धि-मसंविदानस्य तु नास्तिकस्य।
न साम्प्रत वक्तुमपि क्व चेष्टा, क्व दृष्टमात्र च हहा! प्रमाद.॥१॥ इत्यादि।

उच्यते च भवद्भिर्वचनं, मन्ये तत्कूटमानोन्मानव्यवहर्त्तृवद् भिन्नहृदयो भवान् मा मेऽभिप्रायमेते विषयार्थनादिक श्रोतारोऽन्वमा-स्यन्नित्यास्थदनुमानस्याप्रामाण्यमादितः। भवतु किमपि, किं न.। यच्चोक्त–'विसंवादित्वात्तत्प्रामाण्येनानुधावनम्' इत्यादि। तदप्या-त्ममतानुकूलतया निदूषणमभिप्रायाज्ञत्वं भवतां शोभाकारकमपि विद्वद्विचयजुगुप्सनीयमेव। यतो नहि प्रमाणयत्यनुमानाभिधानेन, किन्त्वबाधितेन। न च प्रत्यक्षवद् विसंवादीति कथं तदनुसर्त्तृणा विनिपाताय भवेत चिन्त्यतां क्षणमिति। विनिपातायाभवद् भवतामेव-

मभ्युपगम इतिनिर्विवादः पन्थाः। यच्चात्रादिपुर्भवन्तो'ऽनुमानेनापी'-त्याद्दि। तदप्यनाऽऽलोचितमेव रमणीयम्। यतो न लिङ्गलिङ्गिप्रत्यक्ष-नियमोऽनुमानोत्थाने, किन्तु अन्यथानुपपन्नत्वज्ञानमेव। तच्च प्रत्यक्षेणाऽन्येन वा येन केनापि भवन्न विरोधमधिरोहेत्। अन्यथा कथमिव भवन्त एव तावदनुमानमप्रमाणतयोद्घुष्याज्ञमोहनाय 'चैतन्य भूतधर्म' इत्युदाहरिष्यन्। नहि भूतावलेर्भवन्ती भवद्भिरनु-भूता चेतनास्ति, येनानुमीयते जागद्यते वानुमाय चेतसा भूतधर्म-श्चेतनेयं तदन्वयव्यतिरेकानुविधानादित्याद्यालोचनीयमन्तर्लोचने-नैकान्ते कान्तविचारैः। विचारणीयं तावत्-काठिन्यगुणा पृथ्वी, आपो द्रवलक्षणा, वायुश्चलनलक्ष्मा, तेजः पक्तिलक्षण, शुषिरलक्षण च नभः इति भूतानां नियमिता गुणाः। न चैकस्यापि चेतना गुणः, दृश्यते चेयं। तथा च भाविन्येव व्याप्तिः, यतो भूतव्यतिरिक्तेन भाव्यं केनापि चैतन्यगुणवता। अन्वयव्याप्तिवद् व्यतिरेकव्याप्तेरपि पदार्था-वगमकत्वात्। अनुमापयत्यनुमाता चेतनाया भूतधर्मताऽभावम्। काठिन्यादयो निवर्त्तमाना निवर्त्तयत्येव भूतधर्मतां चेतनायाः। तथा च तद्वानन्यः कोपीति ज्ञाने यत्र यत्र चेतना तत्र तत्र भूतभिन्नः कोऽप्यन्यस्तद्वानिति। भविष्यत्येव भूतधर्मत्वानुपपत्त्याश्चेतनाया-स्तद्वता तद्वदनुमाननिबन्धनीभूता व्याप्तिः। न चासौ दृष्टा कदाचिदपि भूतमात्रे, येनानेकान्तिकशङ्कापि। निमील्य विलोकयतां वा भूतपञ्चक चेदनुमानप्रथा व्यर्थयितुमीप्सा, भवति नवा चेतना, यदि भूतसमुदाये चेतना भविष्यतीति मनो भवेत्। यदि च देहाकारेणाग्रहस्तदापि चिन्तनीयमिद-तावद्यत्र जगति समानाकृतिशरीराश्चेतनावन्तः सन्ति, येन शरीरस्य भवेन्नियताकृतिस्तथापि पञ्चालिकाया मेलयन्तु तत्पञ्चक भवति न वा सा, तत्रापि नैव सा चेत् 'किमागृह्योच्यते— 'भूतधर्मश्चेतने'ति। नहि विपक्षवृत्तित्वासिद्धौ भवेदनेकान्तिकतां कथ च बाधकनामापि। अन्यदिदं तेजो वायुर्वेति चेत्, स एव चेतनावान्, तेनैव चेतनाया अन्वयव्यतिरेकानुविधानात्। अन्वय-

व्यतिरेकानुविधायि च कारणं नामान्तरमेवैतज्जीवस्य तदपि ।

ननु सूक्ष्मं तेज आदि दृष्टं भवद्भिरनुभूतं वा चेतनाकारणतया, न चेत् कथमुच्यते ?, अनुपपत्त्या चेतनायाश्चेद् वरं चिरं जीवन्तु यदायाता एवानुमानप्रथाप्रामाण्ये, न च तथापि सिद्धिर्वाञ्छितस्य जाता। यत सूक्ष्मस्यापि तेजसो वायोर्वा बादरतेजोवायुवत पक्त्यादिगुण एव भावी । न च चेतनाऽन्यविधं तद्युगलं चेत्, किमु लज्जथ ? जीवाभिधानेन, यदन्यमन्यं व्यपदिशथ, न तु भुजङ्गनलिकान्यायेनापि न्याय्याध्वान प्रतिपद्यध्वे । चेतना भूतधर्मश्चेत् प्रत्येकस्य समुदितस्य वेति त्वन्यदेव। अधुना अनुमानप्रथा च विपश्चितां विश्रुतापि समुच्चित्योच्यमाना भविष्यत्युपकारायेति सिद्धेऽपि जीवे उच्यते-

अयस्कारवदादाता जीवो रूपादि गृह्यते ।
भुज्यते भूधन भोक्ताऽस्यात्मा योगाः परेरिता. ॥ १ ॥
चेतनाया कषायेभ्यो लेश्याभ्यः प्राणधारणात् ।
भूतभिन्नत्वतो ह्येभ्योऽन्यार्थं चेन्द्रियपञ्चकम् ।। २ ॥
चित्तं च चेतना ज्ञान [धारणोहे] ईहा तर्को मतिः स्मृति. ।
प्रत्यभिज्ञानमनुमा नैते स्युर्जीवमन्तरा ॥ ३ ॥
नाभावे संशयो जीवे नर्ते जीवान्निषेधक ।
नासतो वाचक शब्दः शुद्धो जीवोऽर्थवान् ध्वनि. ॥ ४ ॥
(समासरहितोऽर्थाढ्यः शब्दो जीवेति वाच्ययुक् ।
नासतो वाचकः शब्दो भुवि शून्यत्वमर्थत ) ॥
शून्यतापेक्षिकी गेहं शून्यं यत्तन्न सासती ।
विशिष्टाकृतिमान् देह आदिमाँस्तत्सकर्तृकः ॥ ५ ॥
एषां प्रयोगा मतिमद्भिरुह्या बोधो बुधानां भविता यदेभ्य. ।
हेतून् समीक्ष्येप्सितमर्थमात्तुं धीरा समर्था ऋषिभिर्यदुक्ता. ॥ ६ ॥

न सौख्यदुःख यदबीजमस्ति, यत्तस्य बीजं तदकर्तृकं न च ।
यद्देहभावेपि विचेतनत्वं, तद्धानभूयः स गतः शरीरात् ॥१॥

इच्छा शरीरे विविधा अभूवन्, पूर्वं गतेऽस्मिन्न च लेशतोऽपि सा ।
तद्भूतभिन्न शरीरे पुराभूद्, भूतेषु सत्सु यदिदं न चेच्छति ॥२॥
(त्कोप्येप भूतेषु न सत्सु गर्धः)

अभूत्पुरेदं वचनानि यच्छत्, प्रश्नान् विचित्रान् विविधार्थचारून् ।
कुर्वत्समाधानविधिं च प्रश्ने, नियोगयोगस्य च दातृ नाधुना ॥३॥

इत्यादि बोध्यं सुधिया स्वयं यत्, सर्वा क्रिया जीवगता न वाच्या ।
यात्तीतकाले करणे सजीवेऽ–धुना न ता एव क्रिया हि तस्य ॥४॥

यच्चावाचि—'नागमोपि प्रमाणयति जीवसत्ता'मित्यादि । तदप्य-समञ्जस साधून, यतो नहि कोपि भवतोऽन्तराऽपलपति जीवसत्तां साक्षात्सिद्धाम् । अत एवोक्तमन्यत्र–'नात्मा लोकेऽपि नो सिद्ध'इति । लोके तावत्—

'अच्छेद्योऽयमभेद्योऽय-मविकार्योऽयमुच्यते ।
नित्य सततगः स्थाणु रचलोऽयं सनातनः' ॥१॥ [गीता]

तथा 'न चास्य आदिर्न च सम्प्रतिष्ठे'त्यादि । 'न हन्यते हन्यमाने-शरीरे' । श्रुतिष्वपि–'शृगालो वै एष जायते यः सपुरीषो दह्यते' । अथापुरीषो दह्यते आक्षोधुका अस्य प्रजा प्रादुर्भवन्ति । बौद्धराद्धान्तेपि–

'अहमासं भिक्षवो ! हस्ती, षड्दन्तः शङ्खसन्निभः ।
शुकः पञ्जरवासी च, शकुन्तो जीवजीवकः' ॥

तथा–'इत एकनवते कल्पे, शक्त्या मे पुरुषो हतः ।
तेन कर्मविपाकेन, पादे विद्धोऽस्मि भिक्षवः' ! ॥

पूर्वमीमांसायां—'काम्ये कर्मणि नित्यः स्वर्ग' इत्यादि । आक्षपादीये—'आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गा प्रमेयम् । शरीरोत्पत्त्यीविकरणे च पूर्वकृतफलानुबन्धात्तदुत्पत्तिः । शरीरोत्पत्तिनिमित्तवत् संयोगोत्पत्तिनिमित्त कर्म । प्रेत्यभावे आत्मनित्यत्वे प्रेत्यभावसिद्धिः' इत्यादि । काणादीयेऽपि—'पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति द्रव्याणि । प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकारा सुखदुःखेच्छाद्वेषप्रयत्नाश्च आत्मनो लिङ्गानि' । तथा कापिलीयेपि—'अस्त्यात्मा नास्तित्वसाधनाभावात् देहादिव्यतिरिक्तोऽसौ वैचित्र्यात् लघुन्यपि पुरुष' इति । पारमर्षे तु—'अत्थि मे आया उववाइए । एगे आया । इह खलु छजीवनिकाया पन्नत्ता' इत्यादयोऽपरिमिता एवालापकाः । इत्यादि । कियल्लेखनीयम् । विहाय भवतः सर्वे एवात्मास्तित्ववादित्वेन आस्तिका, न भवन्त इव नास्तिकः कोऽपि । यदप्यनूदित—'परस्परविसंवादी'त्यादि । तदपि न सूक्ष्मेक्षिकेक्षितम । यतो यथैकस्मिन्नेव वस्तुनि यदि दूरान्तिकादिभेदेन दृष्टिशुद्ध्यादितारतम्याद् भिन्नरूप वीक्ष्यते तत्तदा किं तदभावोऽवसीयते तेन चेद्, यर्हि सर्वशून्यवादी, नास्ति किमपि वस्तु सचराचरे जगति यत्सर्वैः सममीक्ष्यते, तथा भूतानामप्यभाव आपन्नोस्ति । चेद् भूतसत्ता निखिलैर्निभालनात्, तर्ह्यात्मापि सर्वैर्निरीक्षितो ज्ञातो वेदयत्येव । यद्यप्यस्त्येव धर्मविषये तस्य तेषा विप्रतिपत्ति, परं न धर्मिविषये । अत एव च तेषामास्तिकाभिधा, न भवताम् ।

यच्चोदाजहु रागमप्रामाण्यनिरसने-'न च पुरुषविशेष' इत्यादि । तदप्यसमीचतेरणीयम् । यतोऽहिंसादीन्यात्मनोपि सुखनि श्रेयसकराणि न वा ? । आद्ये, तत्प्ररूपणाचरणप्रवण. स्पष्ट एव पुरुषविशेष, तस्य तादृशता च तदाकृत्यापि सिद्धा । यतो नहि पुरुषाणामाकृतिरन्यथाकारं कर्तुं पार्यते । किञ्च-आगमोपि तैस्तादृश एवाहिंसादिमय एव प्ररूपित. । तथा च यावज्जन्तुहितोपदेशकत्वादिनैव तस्य सर्वविर्त्पु-

रुषप्रणीतता साध्यते। तथा चोचिवांसोऽवातयथार्थदिवाकराभिधानाः सूरय एवान्यत्र—

'वपुःस्वभावस्थमरक्तशोणितं, परानुकम्पा सफलं च भाषितम्।
न यस्य सर्वज्ञविनिश्चयस्त्वयि, द्वयं करोत्येतदसौ न मानुषः' ॥१॥

चौलुक्यचूडाञ्चितचरणा अप्याचख्युः—

'वपुश्च पर्यंकशयं श्लथं च, दृशौ च नासानियते स्थिरे च।
न शिक्षितेयं परतीर्थनाथैर्जिनेन्द्र! मुद्राऽपि तवान्यदास्ता' ।१॥मित्यादि

प्रमाणीकृताश्चात एव त आप्तविशेषैर्न च दृष्टेष्टविरोधगन्धोऽपि, तत्कथमिव स्यादन्योन्याश्रयोऽनिर्णयो वा। तदूचुः कलिकालसर्वज्ञपादाः—

'हितोपदेशात् सकलज्ञक्लृप्तेर्मुमुक्षुसत्साधुपरिग्रहाच्च।
पूर्वापरार्थेष्वविरोधसिद्धेस्त्वदागमा एव सतां प्रमाणम्' ।१॥ मित्यादि

अन्त्ये तु स्पष्टैवाऽऽत्मद्रोहिता। अस्त्विति। भवादृशानां नैवासौ निश्चयार्हः। भाग्यं हि महन्महामणेर्यदुत—नायात्यसौ निर्भाग्यशेखराणां द्रोणि। आहुश्च पूज्यपादा अपि—

तदद्दुःषमाकालखलायितं वा, पचेलिमं कर्म भवानुकूलम्।
उपेक्षते यत्तव शासनार्थमयं जनो विप्रतिपद्यते वा ॥१॥

यच्चोदितवन्तो भवन्तो 'जिनेन्द्र' इत्यादि। तदननुविचिन्त्यैव, यतः स्पष्टं दृष्टस्येष्टस्य चापलापिनः कथमिव भवेत् सर्वज्ञत्वम्। यदि च भवेत्, को न सर्वज्ञः सम्पद्येत। दृष्टेष्टविरुद्धत्वं सर्वथा नित्यानित्यवादिनां स्पष्टमेवार्वाग्निबद्धम् कर्त्तृत्वादिनिबन्धे। न च रागद्वेषमोहालया भवन्त्याप्ताः, तेषां स्वात्मघातुकानां कैव कल्याणकणिका भवेत् प्राप्ता। न च तदभावे यथास्थितार्थप्रणयनपरा प्रवचनप्रवृत्तिः परमा भवेत्। अत एव पठ्यते—

'ये स्त्रीशस्त्राक्षसूत्रादि-रागाद्यङ्ककलङ्किताः ।
निग्रहानुग्रहपरास्ते देवा स्युर्न मुक्तये ॥१॥ [ योग० ]

रागादिमत्त्वे च सुतरामलीकभाषिता। प्रतिपादितं च परमर्षिभिः-रागाद्वा द्वेषाद्वा मोहाद्वा वाक्यमुच्यते ह्यनृत'मित्यादि। अत एव च रागादिमतो देवत्वेनोपासकानां शिक्षायै प्रोचुरेतत्-

कृतार्था जठरोपस्थ-दुःस्थितैरपि दैवतैः ।
भवादृशान् निह्नुवते हाहा ! देवास्तिकाः परे ॥१॥

विस्तरार्थिभिर्लोकतत्त्वनिर्णय-वीतरागस्तवाऽयोगव्यवच्छेदद्वात्रिंशिकादयो विलोकनीयाः स्वयम्। एवं च श्रीमज्जिनेन्द्रदेवस्य स्यादेव सर्वज्ञतानिर्णय तदागम-चरिताचरणादिभि । तथा च तदागमप्रामाण्यादपि स्यादेव जीवनिर्णीति । न चातीन्द्रियाणां पदार्थानां सद्भावप्रतिपत्तयेऽस्त्यन्यदागमेभ्यो मानं परलोकविधौ च ।

ऊचिवांसश्चानूचानाः—

'अतीन्द्रियाणामर्थानां, सद्भावप्रतिपत्तये ।
न मानमागमादन्यत् सर्वविद्देशित स च ॥१॥ तथा
ज्ञायेरन् हेतुवादेन, पदार्था यद्यतीन्द्रिया ।
कालेनैतावता प्राज्ञै, कृत स्यात्तेषु निश्चय.' ॥२॥

अत एवोचुरन्येपि—

'आगमेनानुमानेन, ध्यानाभ्यासरसेन च ।
त्रिधा प्रकल्पयन्प्रज्ञां, लभते तत्त्वमुत्तमम्' ॥१॥

मान्यताप्यागमानां तेषामेव स्वीक्रियते परमार्हतै, यत्र जीवादि-प्ररूपणैदम्पर्यशुद्धा । तदाहु —

'आत्माऽस्ति स परिणामी, बद्धः सत्कर्मणा विचित्रेण।
मुक्तश्च तद्वियोगाद्धिंसाहिंसादि तद्धेतु' ॥१॥ रित्यादि।

यच्चाकथयन्-'उपमानं त्वि'त्यादि। तदप्यनभिज्ञातपराभिप्राय-मूलम्। यतो नासदुपमान, शशशृङ्गाकाशकुशेशय-वन्ध्यास्तनन्धयादीनामुपमानताऽदर्शनात। किन्तु यत् सदेव स्यात्तेनैवोपमीयेत। यथा तडाकः समुद्रेण। उपमीयते च सूक्ष्मवायुस्ववेगादिना वा चलत् वस्तु यथा-सजीवमिदं चेष्टते, न चर्त्ते जीवसद्भावं युक्तमेतत्। नहि स नियमोऽस्ति यदुत-उपमानेन भवितव्यमेव, प्रत्यक्षेणादृष्टगोव्यक्ते. सञ्जातकथञ्चित्तज्ज्ञानस्योपमानोपमेयबुद्ध्युत्पाददर्शनात्। कथमन्यथा ब्रूयुर्विचक्षणा.-अप्रतीकारं मिष्टं सिंहवत्प्रौढशब्द. शूरश्च। तथाचोपमानसद्भावादेव जीवसत्ता सिद्धेति। नात्रोपमानं जीवसिद्धौ न मानम्। न्यगादि यच्चार्थापत्तिस्त्वित्यादि। तदबोधाञ्चितकुत्सामनाविलसित भवतां व्यनक्ति जडिमावष्टब्धान्त करणताम्। यतोऽनेकास्तावच्चमन्तरेण।नुपपन्नाश्चेतनाद्या विद्यन्तेऽर्थाः। तथा च कथ चक्षुर्भवन्तो यदुत-'न तादृक्को.प्यर्थ' इति। यच्चावादिषु 'चेतना तथाभूता चेन्ने'-त्यादि। तद्भवता व्यञ्जयति विकलचेतनताम्। यतस्तावत् सामान्येन दर्शितपूर्वमेव यन्न केनापि मानेन चेतनाया भूतधर्मता सिद्धा, तथापि किञ्चिदुच्यते-ननु भूतेभ्यश्चेतनोद्भवति चेत, सा भूतपूर्वा तेषु नवा?। आद्ये, किं प्रत्येकं समुदाये वेति विकल्पद्वयमितो व्याघ्र इतस्तटीतिवदुपतिष्ठते भवन्तम् मोहयितुम्। आद्ये, चेतनानेकत्वप्रसङ्ग.। न चानुभूयतेऽनेका। न च सापि दृष्टा प्रत्येकभूते। कार्येण कल्प्यते चेन्न निर्णया भूतस्यैकत्री करणेऽप्यनुपलम्भात्। व्याप्त्यभावे च कथमनुमानमर्हति प्रथितुम्?। न च प्रत्येकमसत् समुदाये भवदुपलभ्यते, सिकताकणेऽसत्तैलमिव। न चास्ति, परं नोपलभ्यते, समुदायेन च व्यक्तीकरणम्। अनुपलम्भकारणाभावात् भूताना व्यञ्जकत्वप्रतिज्ञानात् अन्यावारकत्वे चाभ्युपगम्यमाने स्पष्टाऽदृष्टपदार्थकल्पना। तथा चात्म—

कल्पनमेव श्रेयस्करम् । अन्यच्च-आवारकस्य मूर्त्तत्वे तेन चेतनाया मूर्त्तगुणत्वात् पुष्ट्युपलम्भः स्यात्, समानवस्तुगुणत्वात् । अमूर्त्तत्वे च नावारकता । अनुग्रहोपघातकारित्वाभावादमूर्त्तानाम् । कथं परस्परोपग्रहो जीवानामितिचेद्, अनन्तानन्तकर्मपरमाणुपरिवेष्टितात्मरूपाः कथञ्चिन् मूर्त्ता एव ते, न चात एव सिद्धानामुपग्रहकारिता । समुदायेन व्यक्तीभवनमपि तदा स्यात् सिद्धं, यद्यंशतो दृष्टपूर्वा स्यात्, प्रत्येकम् । यथाहि-तिल एकस्मिन्नंशतोऽस्ति चेत्तैलं समुदाये बहु भवदवलोक्यते । न पुनरत्र स्वांशतोऽपि सिद्धा । न च केशाद्येकस्य रूपस्य दर्शनाभावेपि समुदायेऽस्य दर्शनम्, तथांशतश्चेतनाया अदर्शने समुदाये दर्शनम् । दूरतोऽदर्शनेऽपि दृश्यते एवासन्नीभावे । परमाणुपुञ्जदृष्टान्तस्तु दूरोत्सारित एव । यतस्तत्र न दृश्यते वस्त्वेवं, अत्र तु वस्तुदर्शनेपि तद्गुणादर्शनम् । अन्यच्च-केनासौ भूतसमुदायः पुञ्जीक्रियते, येनोत्पद्यते तत्समुदाये चेतना स्पष्टा । अन्यस्य कारकस्याभावात् । कालादेः कल्पनेऽपि तस्यैकविधत्वाद् वैचित्र्यहेतुत्वाभावात् स्पष्टैव तत्कारकतयाऽऽत्मसिद्धिः । तथा च किमिति न मन्यते तद्गुण एव चेतना । अल्पबहुत्वादिपरिमाणेनैव तदुत्पत्तिश्चेत, केन तर्हि तदुत्पादनार्थं तथापरिमाणानि मीलितानि भूतानि ?, स एव च कर्त्ता स्यात् । किञ्च-भूतसमुदायादुत्पद्यते चेतना चेद्, यो यो महान् भूतसमुदायः तत्र तत्र चेतनामहत्त्वेन भाव्यम् । यथा महन्मृत्पिण्डसमुद्भवो घटो महानेवाल्पश्चाल्पपिण्डोद्भूतः । न चास्त्येवं, महत्स्वपि हस्तिशरीरादिषु लघुतमेभ्योपि नृभ्यो बुद्धिमान्द्यदर्शनात्, नरेष्वपि च शरीरस्थौल्यानुसारेण बुद्धिभूयस्त्वानवलोकनात् । तत्परिणामः पित्तादि कारणमित्यपि व्यलीकमेव । यतः सत्स्वपि सन्निपातादौ त्रयाणामप्याधिक्ये बुद्धिविकलतैवोपलभ्यते । उदीक्ष्यते च व्यभिचारोपि कृशादीनामपि बुद्धिबाहुल्याल्पीभावौ, तन्न सा तद्धेतुकेति । क्षीराद्यपि सहकारिकारणं चेतनावतः क्षयोपशमे तदावरणस्य, न तूपादानकारणं मूलकारणं वा । यतो दृश्यन्ते एव क्षीरादिपायिना-



मपि बुद्धयल्पत्वं, परेष। तद्‌बाहुल्यं चेति। नांशतः सती चेतना प्रत्येक-भूते समुदाये बहुलतया व्यज्यते। न चासत्यपि समुदायबलेनोत्पद्यते, मद्याङ्गेषु मदशक्तिवदणुषु स्थौल्यवद्वेति पक्षः शोभनः। यतो नहि मद्याङ्गेषु सर्वथा मदशक्तिर्नास्त्येव, धातकीपुष्पपिष्टादिषु भ्रमजन-कत्वत्तदुपशमादिदर्शनात्। अवयवेऽप्रदेवोत्पद्यत समुदाये चेत्, सर्व-स्य न नियता स्याच्छक्तिरसत्त्वाविशेषात्। उत्पद्येत चैवं सति चावा-दीन्यपि पृथ्व्यादिभ्य इति नार्थ. तत्त्वचतुष्टयस्वीकारेण। न चाणुषु स्थौल्यमसदेव तत्समुदाये उपलम्भात् अणुसमुदायपरिणाम एव स्थूलत्वम्। न चामूर्त्तस्कन्धानां स्थौल्यं परमाणुता चान्यनिखिल-परिमाणापेक्षयाल्पतमत्वात् तदपेक्षया चाऽन्यस्याल्पपरिमाणस्यासत्त्वा-देव। न च सौक्ष्म्यस्थौल्येति परिणामद्वयमणुसमुदायस्य बन्धभावा-पन्नस्योच्यते तद्विशेषेतैतेनेति वाच्यम। तस्यापेक्षिकत्वात्। अत ए-वोच्यते निश्चयेन-सर्वलघु सर्वगुरु वा द्रव्य नास्त्येव। न च तर्हि कथं नाणुदशायां प्रत्यक्षमिति। बादरस्थूलस्कन्धा ामेव चाक्षुषत्वोत्पत्तेः। अत एव 'भेदसङ्घाताभ्यां चाक्षुषा' इति। तन्न सर्वथाऽसत उत्पत्तिः सम्भवति समुदायेन। तथा च कथ सर्वथाऽसती समुद्भवेच्चेतनापि समुदाये भूतानाम्। सत्पक्षस्तु पूर्वमेव निरस्त। यद्यप्यभावो न जीव-सत्तासाधकस्तथापि न भूतधर्मश्चेतनेति सावयत्येवासौ, तत्साधने चैनया साधयिष्यत एव जीवसत्ता। अपगमिष्यति च दुर्धरविषय-विषमविषवेगमूर्छितानां भवतो मोहमहिमविजृम्भितम्। तावन्मात्रम् चेत् साधयिष्यत्यभावमानम्। तथा च जीवसत्ता केवलमेकतमप्रमाण-सिद्धा न, किन्तु पूर्वोक्तरीत्या सर्वप्रमाणसिद्धैवेति स्वीकार्यैव सा। नह्याख्यान्ति विद्वांसः प्रमाणसिद्धमर्थं विहाय तद्विपरीतम्।

एवं च सत्यपि प्रमातृत्वादिगुणयुक्तस्यात्मनः साधने प्रमाण-प्रचये शेषमुपलक्षयन्नास्तिकाभिमत प्रत्यक्षमेव जीवसिद्धौ प्रमाणत-योपदिदर्शयिषव आहुः—'स्वसंवेदनसंसिद्ध' इति। तत्र स्वस्य-प्राङ्नि-

रूपितस्वरूपस्य प्रमात्रादिगुणगणयुतस्य, संवेदनं--सम्यगबाधेन-विद्यते-ज्ञायतेऽनेनेति संवेदनं-प्रत्यक्ष प्रमाणम् । यद्यपि ज्ञानमात्रमेव स्वसवेदनमेव, आत्मगुणत्वादात्मन्येवोद्भूयमानत्वाच्च तथापि परार्थ-प्रत्यक्षादिसत्त्वाद् यथा पश्य पुरोऽकलङ्कितज्ञानसम्पन्नशान्त्याद्यप-रिमितगुण रत्नरत्नाकरायमाणां श्रीजिनेन्द्रप्रतिमामित्यादि । यद्वा-सवेदयति-ज्ञापयतीति सवेदनम् । 'नन्द्यादिभ्योऽन [५।१।५१] इत्यने । बोधरूमित्यर्थ. । स्वस्योक्तरूपस्य सवेदन स्वसवेदनं, आत्म-प्रत्यक्षकारकं ज्ञानमित्यर्थः ।

अत्राहु केचिद्यदुत–'नत्रात्मा मनश्चाप्रत्यक्षे'इति वचनान्नै-वात्मा प्रत्यक्ष । सति च तस्मिन्नात्मप्रत्यक्षे तद्वृत्तिज्ञानसुखा-द्यवलोकनापत्तेः । यो यो दृश्यते पदार्थस्तस्य तस्य गुणा अपि वीक्ष्यन्त एव । यथा घटप्रत्यक्षे तद्रूपादीना प्रत्यक्षम् । न चात्मनि ज्ञानादयोऽदृष्टादयो वा ज्ञायन्ते । तन्नात्मा प्रत्यक्षः । न च वाच्य प्रत्यगात्मन्यहंप्रत्ययभावादचार्विदम् । यतोऽहं यज्ञदत्तोऽहं विष्णुदत्त इत्यादि स्वाभिधानोच्चारणपूर्वकमवलोकनेऽन्त, सति च मनसो गमने न किमप्यवेक्ष्यतेऽहंतास्पद समक्षतयेति उच्यते औपचारिक एवासावहप्रत्यय । तदिदमुक्तं पूज्यमुनिना 'यज्ञदत्त इति सन्निकर्षे प्रत्यक्षाभावाद् दृष्टलिङ्गं न विद्यते' इति । न च तर्हि कथमह-मिति प्रत्यय प्रत्यगात्मनीति वाच्यम् । वेत्ति तावदयं जीवो, यदुत-क्रियामात्रं वचनादिक सचेतनविषयक सकर्तृकं कर्तारमन्तरेणो-च्चारणाद्यभावात् तन्मदीयवचनादिकमपि सकर्तृकेन भाव्यम् । कर्त्ता च नान्यः कोपि देहे मदीये, किन्त्वहमेवास्मीति कर्ताहमेव । मदी-येच्छाद्यनुसारेणैव च जायेते प्रवृत्तिनिवृत्ती इति सामान्यतोदृष्टाऽनु-मानेनैवाहमिति प्रत्यगात्मनि प्रत्यय । तदाह-'सामान्यतोदृष्टाच्चा-विशेष' इति । ननु च यदि प्रत्यगात्मनि जायमानोऽहंप्रत्ययो न प्रत्यक्ष. तर्हि किमिति भासते प्रत्यक्षोऽहमित्यादीतिचेत् । नासावागमसस्कार–

जन्योऽप्यहंप्रत्ययः, किन्तु झटित्यात्मनि बहुशः प्रत्ययभावादहंप्रत्ययेन प्रत्यक्ष इव गृह्णाति। यथा बहुशोऽनुस्मृतमङ्गनादि प्रलोकयति मनसा साक्षाद्भूतमिव, तथात्रापि। तदिदमाह- 'दिष्ट्यात्मनि लिङ्गे एक एव दृढत्वात् प्रत्यक्षवत् प्रत्यय' इति। न च शारीरोऽयमस्त्विति। शरीरादिगोचरेऽस्य बाधितत्वादहं सुखी ज्ञानवानित्यादिना प्रत्यगात्मभावप्रत्ययेन। तदिदमुदाहृतं-'अहमिति प्रत्यगात्मनि भावात् परत्राभावादर्थान्तरप्रत्यक्ष' इति। तस्माद्यथा नासावहंप्रत्ययः शारीरिकः तद्वदात्मप्रत्यक्षजन्योऽपि नैव, किन्त्वात्मानुमानाभ्यासजन्यदृढसंस्कारोद्भूत इति। न चैतद्युक्त्यनुसारीति नोपादेयमुपादानोपादेयविधिविचक्षणैः। कथमिति चेत्? प्रथमं तावद्विचार्यते यत् अहर्जातस्यार्भकस्याप्यहमिति यः प्रत्ययः स नानुमानिकः। न च नायं भवति तस्य, स्तनादानादिना मुखकमलोल्लासात् सुख्यहं श्रान्ता मे क्षुदिति चाध्यवसायभावावगमादेव। यतः स न वेत्त्यनुमानाभिधानमपि नवा वेत्ति नवा कर्त्तुं जानात्यपि, तत्कथमहं प्रत्ययो न प्रत्यक्षविषयः? न प्रत्यक्षाभावे च सहस्रशोऽनुशीलि। न प्रत्ययविपर्ययता न कदाचिदपि एवमनुभूयते-यदहं मनोऽहं हृषीकाणि, सहस्रशोऽनुमितेऽपि वह्नौ धूमलिङ्गदर्शनेनायं वह्निरिति प्रत्ययः प्रत्यक्षः।

यच्चोदवोचन्-'न ज्ञानसुखादि प्रत्यक्षं सति चात्मप्रत्यक्ष' इत्यादि। तदपि विरुद्धमेव। यतोऽहं सुखीति ज्ञानवानिति स्पष्टः प्रत्ययः। यच्चनोद्बीक्ष्यतेऽदृष्टमिति। तदपि न। यतस्तद्विभिन्नमेव द्रव्यमात्मावबद्धम्। न च तन्मानसो विषय इति कथं ज्ञायेत ?। अयमेव च तस्य बाधमूलं गुणत्वे, यदुत-ज्ञानसुखादिवद् नेदमध्यक्षम्। सति च तथात्वे नेदं गुणरूपम्। न च वाच्यं भाव्यं प्रत्यक्षेण तेनापीति। यतः पृष्ठलग्नरज समुदायवत्तस्याप्रत्यक्षत्वं स्यादेव। यथा स्पार्शनस्य सत्यपि क्षयोपशमे बद्धस्पृष्टग्राहित्वमपाटवात् तथात्मनः प्रत्यक्षत्वेऽपि तथानैर्मल्याभावान्नादृष्टस्य प्रत्यक्षता। न च पृष्ठतः सुखादि न वेद्यते, वेद्यते

चेत्तत्रावबद्धात्मप्रदेशानामग्रहणे कथमेतेषु सुखं दु ख वेत्यहं सुखी दुःखी वेति जायते ज्ञानम् ? । न च प्रत्यक्षाभावेऽहमयं वेति स्याज्ज्ञानम्, तस्यात्मावलम्बनत्वात् प्रत्यक्षावलम्बनत्वाच्च । अन्यच्च-अयमपि नियम एव जगति जगन्नियमितो, यदुत-द्रव्यप्रत्यक्ष एव तद्गुणानां प्रत्यक्षत्वम् । यथा घटे रूपादीनाम् । एवमत्र । यदि नात्माऽध्यक्षसिद्धः स्यात् कथमिवास्य ज्ञानसुखादयः प्रत्यक्षा स्युः ? सन्ति च ते प्रत्यक्ष-वेद्या. । नह्यग्नावप्रत्यक्षे भवत्युष्णस्पर्शभास्वरादे प्रत्यक्षत्वम् । तदात्मा प्रत्यक्षसिद्ध एव । यदप्यचीकथन्-'न च वाच्यं प्रत्यगात्मनी'त्यादि । तदप्यसाम्प्रतमेव, यतो नह्यहं क इत्यवलोकने न भासतेऽहमात्मेति । तथाभासनादेव चाहं मा न जानामीति संशयो मे मयीति च भवति । भवेदन्यथा न वेद्मि घटादिसंशयो वा, स्थाणुपुरुषादाविव-त्यादिवत् । अवभासाभावे कोऽहमित्युदचरत् ? । औपचारिकत्वं च भवति मूलार्थबाधे एव । 'मुख्यार्थबाधे सति च प्रयोजने भेदाऽभेदा-भ्यामारोपितो गौण'इतिवचनात् । न चात्र तथेति नायमौपचारिकः । यच्च न्यगादिषु -'सामान्यतोदृष्टादि'त्यादि । तदपि न युक्तिक्षमम् । यतो नहि व्याप्तिग्रहाभावेऽसति च सम्बन्धस्मरण दौ भवत्यनुमानम् । 'व्याप्तिकरणकमनुमान'मिति 'व्यापारस्तु परामर्श. 'करण व्याप्ति-धीर्भवेदि तिवचनाच्च । न चात्राऽऽत्मप्रत्यक्षाभावेऽन्यत्र प्रत्यक्षाभावाद् भवति व्याप्तिग्रहो वचनादिकमित्यादि । प्रत्यक्षाभावे चात्मनि पृथगात्मन्यहताऽभाववत् स्वात्मन्यपि तदभाव एव स्यात् । न चास्तीत्य-बाधप्रमाणबाधितमेतत् । शेष तु निरस्यमुक्तानुसारेण । यदि च स्या-त्तस्य वचसि प्रामाण्याग्रहो-दिव्यो हि स महामुनिरिति । तदायोज्य-मेवमेतत्-परस्यात्मा मनश्चाप्रत्यक्षे । नहि ते घटादिवत् स्वात्मादि-वच्च प्रत्यक्षगम्ये । यतो नैन्द्रियकं न च मानसमिति । तज्ज्ञानाभावे च कथमिव स्यादहंत्वेनात्मनो व्याप्तिरित्युक्तम् । न चाहमिति प्रत्यक्षोच्चारश्रवणाच्छब्दप्रत्यक्षद्वारा हि प्रत्यक्ष इति वाच्यम् । तत्र तदनवलोकनादित्याह 'यज्ञदत्त' इत्यादि । सन्निकर्षो हि परात्मापेक्षया

शरीर एव, नत्वात्मीय:, तर्हि ज्ञायते कथमसावित्ति प्रोवाच-'सामान्यत' इत्यादि । स्वात्मनि निर्णीतोऽहंप्रत्यय आत्माविनाभावीत्यनुमीयतेऽ-त्रापि स तथैव । अत एवान्यथानुपपत्तिरेव लक्षणं हेतोः । न सामान्य-लक्षणया सर्वहेतूपस्थितेर्व्याप्तिभावादिना तदज्ञानामपि व्याप्तिग्रहाव-लोकनात, अन्यथानुपपत्तिनिर्णये चान्येषां धूमानां दर्शनाद्वर्णगुणा-दीनां ज्ञानाद् भविष्यत्येव धूमताज्ञानम् । अन्यथा कथमयं घटोय स गकार इत्यादि भवेत् । न चात्र सर्वे आत्मान उपस्थिता ज्ञाता वा तेषा-मद्यापि नास्त्यात्मतया कथं पुनरुपस्थितिः । न च सूर्ये गतिपूर्विकां (देशांतरप्राप्तिं) गतिमवेक्ष्य य त्वद्गतिमत्पदार्थोपस्थितिस्तज्ज्ञानं वा भवति, येन पुरुषे तत्प्रमीयमाणं भवेदबाधितम् । भवति चाबाधित मिति न सामान्यलक्षणयार्थ इत्यल प्रसङ्गानुप्रसङ्गेन । न च कथ-मुक्तम्'प्रत्यक्षवदि' त्यादि । यत. केषाञ्चिदनवाप्तात्मदेहभेदविवेकानां कथं शारीरिक एवाहमिति प्रत्यय इति प्रश्नसम्भवे । यद्वा-तादृशा-नामेव भवति कदाचिदयं दुःखीत्यादि प्रत्यक्षाभावेऽपि प्रत्यक्षो-चार इदमा दृश्यते तानुद्दिश्याऽस्यावश्यं वक्तव्यत्वात् । कथमन्यथाऽ-वदथत 'लिङ्ग' इत्यादि । अत एव चोक्तमग्रतोऽर्थान्तरप्रत्यक्ष इति । नहि स्वात्मा अर्थान्तरप्रत्यक्ष', किन्त्वन्येषामेवात्मानस्तथाविधा अर्था-न्तरेण-शरीरेण । नहि शरीराद्भिन्न' सर्वथा आत्मेति शरीरद्वारैवा-ऽन्य आत्मान प्रत्यक्षा इति सुष्ठुक्त-'परात्मानमनुसृत्य न प्रत्यक्ष' इति । प्रकृते च सति प्रत्यक्षकारके आत्मनो ज्ञाने भवितव्यमेव तेनाध्यक्षेण इत्युक्तमबाधं स्वसंवेदनमिति । तेन सम्यक्-विपर्यय-संशयानध्यवसायानध्यवसिततया सिद्धो-निर्णीतो, न साध्यः । नहि हस्तकङ्कणे भवत्यादर्शापेक्षा । न च तत् साध्यतेऽपरेण । न च तत्सिद्धे न । तद्वदत्रापि प्रत्यात्माहंप्रत्ययादेव सिद्धो. नतु साध्योऽपि । स्वस्वात्मानमधिकृत्यैतदुच्यते । परेषा तथात्वाभावात । न च शरीरा-दावहंप्रत्ययवदयं बाधित इति बोधनाय 'स'मिति । न चात्म-प्रत्यक्षत्वाभावे तद्वृत्तिज्ञानादीनां भवति प्रत्यक्षता । न वा स्वा-

स्मन्यहंताप्रत्ययो भ्रान्त इति तु निर्णीतपूर्वम् । तथा चाबाधितनिर्णीताहमत्ययप्रत्यक्षत्वादात्मा प्रत्यक्षसमधिगम्य इति नात्मद्रुहोऽन्तरेण भवन्ति सन्दिग्धा इति । ननु किंनामासौ प्रमातृत्वादिगुणयुक्त ? इत्याहुः पूज्या- जीव' इति । तत्र जीवति जीविष्यति अजीवदिति जीव·प्राणधारकः । नहि प्राणधारका न सिद्धा इति तेषां न जीवत्वम् । नयविशेषेण तथात्वेऽपि ज्ञानादिलक्षणभावप्राणधारकत्वात् जीवत्वाविरोधात् । न च ज्ञानादीनां कथं प्राणत्वं ? न तेषां वायुप्रचारव्यपदेश्यत्व यत इति । यथाहि श्वासमात्रव्युत्पत्तिसिद्धोऽपि प्राणशब्दो जीवलक्षणमात्रे उक्तः—

पञ्चेन्द्रियाणि त्रिविधं बलं च, उच्छ्वासनिःश्वासमथान्यदायु. ।
प्राणा दशैते भगवद्भिरुक्तास्तेषां वियोजीकरणं तु हिंसा ॥१॥ इति

'प्रमत्तयोगात् प्राणव्यपरोपणं हिंसे'तिवचनाच्च । न च ज्ञानादयो न लक्षणं जीवस्य । तेषामेव तत्त्वतो जीवलक्षणत्वात् । 'चैतन्यलक्षणो जीव' इति 'उपयोगलक्षणो जीव' इति 'नाणं च दंसणं चेवे'त्यादौ तथाभिहितमेव । तथा च सिद्धानामेव परिपूर्णज्ञानादिलक्षणत्वात् परमार्थतो जीवत्वम् । यत्तु प्रोवाचौपशमिकादिभावपञ्चकयुत एव जीवः तन्मते औदयिकद्रव्यप्राणधारणाभावात् मा जीवत्वं (भूत) भून्न कोऽपि विरोध., सापेक्षवाक्यत्वात्तस्य ।

ननु किमिति विशेषणोपादानादेव विशेष्यनिर्देशसिद्धे ,पृथग्विशेष्यनिर्देश ? नहि कोप्यस्ति प्रमात्रादिलक्षणोऽन्यः । सति च सम्भवव्यभिचारे विशेषणस्यार्थवत्ता । तन्नार्थोऽनेनेति चेत् । सुष्ठूक्तं, परमयुक्तमिदम् । यतो ये हि पूर्वोक्तलक्षणमात्मानमभ्युपगम्यापि कक्षीचक्रु —तस्यौत्पातिकत्वं शरीरादभिन्नता च तन्मतव्यपोहायैतद्वचनोपन्यासस्यावश्यकत्वात् तद्व्यवच्छेदस्तु 'जीव' इति स्वतन्त्राभिधानेन त्रिकालव्युत्पत्त्या च । यतो नहि स्वतन्त्रपदार्थाभावे सुखदुःखा-

दिवर्दभिधानानि भवन्ति । न च तादृशस्त्रिकालिकजीवनतायुक्तः । यद्वा—जीवशब्दो दशवैकालिकादिपरमागमप्रणीतप्रसिद्धनिक्षेपादिप-रिगतजीवविशेषज्ञापनाय । ते च निक्षेपादय एवं—

जीवस्स उ निक्खेवो परूवणा लक्खण च अत्थित्तं ।
अन्नामुत्तत्त निच्च-कारगो देहवावित्तं ॥१॥

गुणि—उड्ढगइत्ते यानिम्मय—साफल्लता य परिमाणेत्ति । तत्रनिक्षेपास्तावत्—

नाम ठवण गयाओ दव्वे गुणपज्जवेहिं रहिउ त्ति ।
तिविहो य होइ भावे ओहे भव तब्भवे चेव ॥ १ ॥

ओघजीव एवं 'संने आउयकम्मे धरई तस्सेव जीवई उदए ।
तस्सेव निज्जराए मओत्ति सिद्धो नयमएण ॥ २ ॥

न सिद्धान् विहायौघेन जीवत्वाभाववान् कश्चिदपि । विग्रहगता-वप्यस्त्येवाऽऽयुष उदय इति तेऽप्योघजीवनवन्त एव । भवतद्भवजीवाश्चैव—

जेण य धरई भवगओ जीवो जेण य भवाउ संकमइ ।
जाणाहि तं भवाउ चउव्विह तब्भवे दुविहं ॥ ३ ॥

तद्भवजीवित मनुष्यतिरश्चां भावात् तद्द्विविधं, न देवा नारका वा च्युता. पुनस्तत्रोत्पद्यन्ते इति न तेषामेतत् । प्ररूपणायां—

सुहुमा य सव्वलोए परियावन्ना भवंति णायव्वा ।
दो चेव वायराणं पज्जत्तियरे अ नायव्वा ॥ ४ ॥

सूक्ष्मा बादराश्चोभयेऽपि पर्याप्तेतरभेदाश्चकारात् सूक्ष्माणां समुच्चयनात् । लक्षणानि च हेतवस्ते चेमे—

आयाणे परिभोगे जोगुवओगे कसाय लेसा य ।
आणापाणू इंदिय बंधोदयनिज्जरा चेव ॥ ५ ॥

चित्त चेयण-सन्ना विन्नाण धारणा य बुद्धी य ।
ईहा मई वियक्का जीवस्स उ लक्खणा एए ॥६॥ अस्तित्वसाधने-

जो चिंतेइ सरीरे णत्थि अहं स एव होइ जीवोत्ति ।
न हु जीवंमि असंते संसयउप्पायओ अन्नो ॥ ७ ॥

लक्षणादयश्च पूर्वानुमानप्रस्तावे ये दर्शिता तत्समाना अपि प्रसङ्गतोऽभिहिता पुनरत्र । अन्यत्व-अण्णो देहा गिहाउ पुरिसोव्व । अमूर्त्तत्वं-अइंदियत्ता अच्छेयभेयत्ता । रूवादिविरहओ वा अणाइपरिणामभावाओ । नित्यत्व-निच्चो अविणासि सासओ जीवो । निच्चो जीवो विभासओ अग्हं । कर्त्तृत्व-सकम्मफलभोइणो जओ जीवा । व्यापित्व-देहव्वावी मओगिग उण्हं व । गुणित्वं-होइ गुणेहि गुणिच्चि विण्णेओ । ते भोगजोगउवओगमाइरूवाइ व घडस्स । ऊर्ध्वगतित्व-अगुरुलहुत्ता सभावउड्ढगई । अनिर्मदत्व अमओ य होइ जीवो कारणविरहा जहेव आगासं ।

साफल्यं—साफल्लदारमहुणा निच्चानिच्चपरिणामिजीवंमि ।
होइ तयं कम्माण इहरेगसभावओऽजुत्तं ॥१॥

परिमाणं-वित्थरओ जीव लोगमित्त तु । ओगाहणा उ सुहुमा तस्स-पएसा असंखिज्जन्ति । यद्वा-अत्र जीवशब्देन लक्ष्यनिर्देश । नहि प्ररूपिते लक्षणेऽपि लक्ष्यनिर्देशो दोषाय, आपो द्रवा इत्यादिवत् । तथा च पूर्वप्ररूपितं यत्प्रमात्रादि तत् सर्वं जीवस्यैव लक्षण विहाय कर्त्तृत्वभोक्तृत्वे, कर्मणोऽपेक्षया चेद् गृह्य ते तद्वत्त्वादिविवक्षा च न क्रियते चेत् । न च प्रमातृत्वादिकमव्याप्त्यसम्भवदोपदूषितम्, सर्वेषा-

मेव तथात्वात् । विग्रहगत्यादावपि चास्त्येव समग्रापि शक्तिः, तत्रापि कर्माष्टकवेदनाद्वा सर्वमपि । यद्वा—'जीव प्राणधारणे' इतिवचनात् तस्माद् 'अचि'त्यचि 'नाम्युपान्त्ये'ति के वा जीव इत्ययमपि लक्षणावेदकम् (कः) । तथाच न प्राणो जीव, किन्तु तद्धारकोऽन्य एवेत्युक्त स्यात् । ननु का तस्याभिधेति प्रोचिवांसः प्रवचनप्रधाना — 'क्षित्याद्यनामक' इति । तत्र क्षियन्ति-निवसन्ति गमनं वा कुर्वन्ति सकर्मका जीवा सशरीरा वा प्राणिनो गत्यर्थाना ज्ञानप्राप्तिव्याप्त्यर्थत्वात् त्रय एतेपि यथायोग ग्राह्या इति क्षितिः । 'क्षि निवासगत्यो'रिति तौदादिकात् 'स्त्रियां क्ति [५।३।९१] रिति क्तौ सिद्धयत्येव । एवं आदिशब्दाच्छेपोदकसमीरणानलवनस्पति—द्वित्रिचतु पञ्चेन्द्रिया पर्याप्तेतरभेदभिन्ना ग्राह्या । अनेका हि भेदा जीवस्य । यदाह—

द्विविधाश्चराचराख्यास्त्रिविधाः स्त्रीपुंनपुंसका ज्ञेयाः ।
नारक-तिर्यङ्-मानुष-देवाश्चतुर्विधाः प्रोक्ताः ॥१॥

पञ्चेन्द्रियास्त्वेकद्वित्रिचतुःपञ्चेन्द्रियास्तु निर्दिष्टाः ।
क्षित्यम्बुवह्निपवनतरवस्त्रसाश्चेति षड्भेदाः ॥२॥

एवमनेकविधानामेकैको विधिरनन्तपर्यायः ।
प्रोक्तः स्थित्यवगाह-ज्ञानदर्शनादिपर्यायैः ॥३॥

एते यद्यपि जीवभेदास्तथाप्युदाहार्षुः -नामयति-प्रह्वीकरोति तत्तद्रूपेण जीवं लोके वित्तीकरोतीति नाम 'सात्मन्नात्मन्वेमन्त्रोमन्लोमन् ललामन् नामन् पाप्मन् पक्ष्मन् यक्ष्मन्निति' मनि नमेरानिपातनान्नाम । क्षित्यादि नाम न यस्य स क्षित्याद्यनामकः । 'एकार्थं चानेकं [३।१।२२] मित्यत्रानेकग्रहणात् त्रिपदबहुव्रीहिः । 'शेषाद्वे'ति च कच् । अत्रावधेयमिदं धीधनैर्यत् तत्तत्कर्मोदयेन तत्तद्गत्यवाप्तौ सोऽभिधीयते पृथ्व्यादिनाम्ना, परं तस्य न नाम जीवस्य, तदानीन्तनपर्यायस्यैव । तथा नामत्वात् पर्यटंश्च धारयत्येवासावनेकविधानि

नामानि। न चासौ भिद्यते तावता। अङ्गीकृतानि चानेनानादिभव-परम्परां पर्यटताऽऽजवंजवीभावेनानन्तपुद्गलपरावर्त्तान्यावत् नाना-विधानि कोशसमुच्चयगणनातीतान्यपि नामानि, पर न तानि जीव-नामानीति। न काप्यवमता जीवे पर्यायाणां परावृत्तिस्वभावता निरूपितैव पूर्वमिति योग्यमूचु—'क्षित्याद्यनामक.' तथा च य ऊचु'—'नामरूपाभ्यां व्याकरवाणी'त्यादि। तदत्रशिष्टविषय जीवपर्याय-विषय वा ज्ञेयम्। नास्य तु किमप्यस्त्यभिधानम्। ननु च नास्त्येव त्रिविष्टपेऽपि परिदृश्योऽपरिदृश्यो वार्थो यो नावाप्नोति स्वाभिधानेना-भिधेयताम्, सर्वेषामेव वाच्यत्वात्। तन्न, यतो न तावत्तादृशोऽस्ति प्रमाणसिद्धो नियमो नयान्तरेण तथाभिधानेपि। यतोऽभिहितमेव पूज्यपादै—पण्णवणिज्जा भावा अणतभागो उ अणभिलप्पाण'ति। यद्वा-यथा तेषां पदार्थत्वेन नामधेयाभिधेयता तथाऽस्यापि जीवत्वेन भवतु, पर तेषां यथा न विशेषाभिधानानि तथाऽस्य भवन्त्यपि तानि नैतदभिधायकानि यथा भिन्नभिन्नार्थावगाहदानाद् विविधपदार्थस्वरूपा-नुसारेणान्तरिक्षस्यानेकविधत्वेन घटाकाशादिभेदेनाभिधानाभिधेय-त्वेऽपि न तस्य स्वतन्त्रमस्ति नाम आकाशमन्तरेण। एवमत्रापि न किञ्चिज्जीवाभिधानमपहायापरमस्ति नामधेयम् येन स्वतन्त्रमभि-धीयतेति। एवमभिधाय बालानां न्यायमार्गावताराय सक्षेपेणोपसहृ-रन्तः स्वौद्धत्यं परिजिहीर्षवो व्यवस्थाया एतस्या अनादिनिधनतां आहुः-

प्रमाणादिव्यवस्थेय-मनादिनिधनात्मिका।
सर्वसंव्यवहर्तॄणां, प्रसिद्धापि प्रकीर्त्तिता ॥३२॥

तत्र प्रमाणं पूर्वोक्तस्वरूपं, तदादिर्येषां ते प्रमाणादयः, आदि शब्देन तद्दोप-वादस्वरूप-प्रमाणफल-तद्विषयनयस्वरूपतद्विषयस्या-द्वादश्रुतलक्षणप्रमातृलक्षणग्रहः। 'प्रमाणतत्त्वव्यवस्थापनार्थमिदमुप-क्रम्यते' इति प्रमाणनिरूपणप्रतिज्ञानेनोपक्रान्तेऽपि प्रस्तुते प्रकरणे

यदेवमुपसमजिहीर्षितु. तन्नैतदनाभोगविलसितमप्रक्रान्तं वा किन्त्वादित एवावधारितं निरूप्यतयेति ज्ञापनाय। तेषां प्रमाणादीनां व्यवस्था, व्यवतिष्ठन्ते-सम्यक्तया स्थिरीभवन्ति न नश्यन्त्यनया प्रमाणादय इति व्यवस्था। स्थो वा [ ५।३।६६ ] इति वा वचनाद्वि स्त्रियां व्यवस्थाऽङन्तस्य स्त्रीत्वनियमात्। व्यवस्था-मर्यादा इत्यर्थः। का? इत्याह-इयमिति। यद्यपि 'इदमस्तु सन्निकृष्टे' इत्यनेन प्रत्यक्षीभावमापन्नायामेव व्यवस्थायां युज्यते वक्तुम्, न च व्यवस्था केनाप्यैन्द्रियेणाधिगम्यते नैवावक्ष्यन्तेयमिति। परं प्राक् प्रोक्ता सर्वाऽपि हृद्विवरवर्त्तितया मानसप्रत्यक्षैवेति इदमा निर्देशः। कीदृशेत्याह-अनादिनिधनात्मिका इति। तत्र आदीयतेऽनेनेत्यादि. 'उपसर्गाद्' किरिति वचनात्। नीति नितरां दधाति धारयति, पर्यायाऽन्यत्वं वर्त्तमानपर्यायविगमं वेति 'तुदादिवृजिरञ्जिनिधाञ्भ्य किदिति किदने निधनमिति पर्यवसानम्। आदि च निधनं चादिनिधने, नादिनिधने यस्य सोऽनादिनिधन, स एवात्मा स्वरूप यस्याः साऽनादिनिधनात्मिका। अत्र 'शेषाद्वा' [७।३।१६५] इति कच्चि आत्स्त्रियामावित्यापि 'अस्या यत्तत्क्षिपकादीना [२।४।१११] मितीकारे च रूपसिद्धि। अनेनास्या अकृत्रिमतामाहुः। उक्तं च पूर्वमेव 'प्रसिद्धानि प्रमाणानि, व्यवहारश्च तत्कृत' इति पूर्वार्द्धेनायमर्थ। यतो 'न कदाचिदनीदृशं जगदि'ति कृत्वा। यद्वा-सृष्टेरस्या शाश्वतत्वात् तद्गतलोकानामपि शाश्वतत्वं, तेषां शाश्वतत्वे च सुतरां व्यवहाररहितजीवनाभावाद् व्यवहारस्यानादित्वम्। तथैव प्रलयस्याप्रामाणिकत्वादेवानन्तत्वम्।

ननु च विश्वस्यैव तावद् ब्रह्म-प्रकृत्यादिना जनितत्वे कथमियं अनादिनिधनात्मिका भवितुमर्हति? न भवत्येव। ग्रामाभावे सीमा। यदि च नाभूवन् व्यवहारकर्त्तार एव कथ भवेद् व्यवहारः? न च विश्वस्य विश्वाधिपतिविहितत्वमसिद्धं,येनैषा कल्पना स्याल्लघीयसी। किन्तु युक्त्यागमाभ्यां सुसिद्धमेव। यतो जन्तुर्हि मया कि

सुखं दुःखं वा वेदितव्यमिति न जानात्येव। तदज्ञाने च कुतस्तरां तदुपायेषु प्रवृत्तिं विदध्यात्। इष्टकारणतादिज्ञानजन्यत्वात्तस्याः। कथं चादृष्टस्वर्गश्वभ्रादिमार्गो गच्छति स? तदवश्यं तन्नियोजकेन भाव्यम्। नाज्ञानिनस्तिर्यञ्चः स्वयं प्रभविष्णव इष्टानिष्टे ज्ञातुं तत्र प्रवर्त्तितु वाभीप्सितनगरगतौ नियोजनीया एव तेऽधिष्ठात्रेति। तदुक्त—

'अज्ञो जन्तुरनीशोऽय-मात्मनः सुखदुःखयोः।
ईश्वरप्रेरितो गच्छेत्, स्वर्गं वा श्वभ्रमेव वा ॥१॥ इति

कथं चाचेतनानि भूतानि जन्तूनामुपकारायापकाराय च प्रभवन्त्यनधिष्ठितानि। नहि निशितापि करवाललता छिनत्ति पाशादिकमनधिष्ठिता अधिष्ठात्रा। जन्तुश्च न समर्थो ज्ञातु तानि तत्सामर्थ्यं वा, किमुत तान्यधिष्ठातुम्, तद्भाव्यमेव विश्वशक्तिभृता विश्वविधात्रा। न केवलं पारलौकिककार्योपयोगितया तत्सिद्धि, किन्त्वैहिकपारलौकिकोभयोपयोगितयैव तस्य साधिष्ठातृत्वसिद्धिरित्यूहितैव। यतो दरीदृश्यमानं सचराचरं जगद्विशिष्टाकृतिमत्त्वात् सकर्त्तृकमेव भवेत्। विशिष्टाकृतिमत्त्वेन कार्यतान्वितत्वात्। नहि घटादिक विविधाकारभृत् स्वयमेव प्रादुर्भवदवलोकितम्। तथात्वे च न कार्यः स्याद्यत्न. केनापि कस्मैचिदपि, स्वयं सिद्ध्यमानत्वात् पदार्थानां, क्रियते च यत्नो भवदीयैराप्तैरन्यैर्भवद्भिरपि चेत्यायात यवक्रीणनन्यायेन कार्यजातस्य सकर्त्तृकत्वम्। तथा अध्यक्षं चरीक्रियमाणोऽणुसमुदायो विशिष्टसामर्थ्यवता योजित एव, अण्वादीनां स्वयं चेतनाविकलत्वाद् गत्ययोगात्। क्रियते च गृहाद्युपचयार्थिभिस्तदुपचयनादिको यत्न. । तद्भाव्यमेव केनाप्यचिन्त्यशक्तिमतेशोऽन्वक्षमीक्ष्यमाणो जगत्परिणतोऽणुसमूहो येनैकत्रित. स्यात्। तथैवोदीक्ष्यमाणा. सूर्यादयो यदवधृता आकाशे निरन्तर समर्याद तिष्ठन्ति, तन्नाकर्त्तृकम्। नहि मूर्त्तं द्रव्य महदप्रयत्नमधरीभावं तिष्ठति कदापि। तद्भाव्यमवश्यं केनचिदपि तद्धारयित्रा। न चैष विषयोऽस्मदादीनामित्यसममहिमनिलयविहितत्वमन्या—

हृतम् । अन्यच्च-यद्यद् वाक्यमवेक्ष्यते क्षितितले तत्त् पूर्वप्रकल्पितसङ्केतानुसारेणार्थवत्तया आदौ सङ्केतकल्पकश्च तथाविधः कोपि स्वीकार्य एव तादृशो, यदुपज्ञमवेक्ष्य सङ्केतादिप्रवृत्तोयमखिलो बुद्धिमदाधारो वाक्यव्यवहारो वाच्यवाचकभावमूल. । एवमर्थावधारणं वाक्यादिकमपि च सविधातृकमेव । यद्वा-न केनाप्यनध्यापिता प्रतीयते सङ्ख्या तदर्थं चर्करीति च सर्वोऽपि लोको वालकानां पाठनाद् । तथा च भाव्यं तथाविधेनैकेनादौ प्रवर्त्तयित्रा, येनेयमाविष्कृते लोकेभ्य इति । न चेदं स्वमनीपिकाविजृम्भितमेव, किन्तु विद्वदुद्गाहृतमेव ।

तदुक्तं-'कार्याऽऽयोजनधृत्यादेः, पदात् प्रत्ययत स्फुटम् ।
वाक्यात् सङ्ख्याविशेषाच्च, साध्यो विश्वविदव्यय' ॥१॥

आदिशब्दाच्चात्र नाशादिग्रहः । नहि नाशोपि भवति मूर्त्तद्रव्यस्यैवमेव, घटादिनाशस्य स्पष्टं प्रयत्नजन्यत्व निष्टङ्क्यते इति । आगमेपि-द्यावाभूमिं जनयन् देव एक विश्वस्य कर्त्ता भुवनस्य गोप्ता । असदेवेदमग्र आसीत् । ब्रह्म वेदमग्र आसीत् । मया अध्यक्षेण प्रकृतिः सूयते सचराचरं तपाम्यहं वर्षं निगृह्णामि उत्सृजामि च ।

आसीदिदं तमोभूत-मविज्ञतमलक्षणम् ।
सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत् ॥१॥

इत्यादिष्वनेकेषु श्रुति-स्मृत्यादिषूपलम्भात् कर्त्तृत्वस्य स्पष्टमेवाभिमतं विश्वस्य विश्वाधीशविधातृत्वम् । न च युक्त्याऽऽगमप्रतिष्ठितमर्थं प्रतिष्ठितप्रतिष्ठावन्तोऽप्रमाणयन्ति । तथात्वे समूलं क्षयापत्ते प्रतिष्ठायाः । सति चैवमादिभावे विश्वभावे कथङ्कारं स्यादनादिनिधनत्वं प्रमाणादिव्यवस्थाया इति चेद् ।

अत्र प्रतिविधीयते-यत्तावदुक्त 'विश्वस्यैवे'त्यादि । तत्र साधयिष्यते व्यवहारकर्त्तारः अनादिका इति कर्त्तृत्ववादस्याप्रामाणिक-

त्वनिश्चयेन, येनोन्मीलिष्यति भवतां विवेकविलोचनं, तथापि न पूर्वं सर्गो नाभूत्, यथा पूर्वमकल्पयदित्यनेन पूर्वसृष्टेरभिधानात्। उक्तं चात एव ब्रह्मसूत्रकारैः—'उपपद्यते चाप्युपलभ्यते चे'त्यत्र श्रुतिस्मृत्याद्युपलम्भस्य प्रत्यक्षतानिर्देशेनोपलभ्यते इति, युक्त्या तु कर्माभावत्वादिक्रियोपपद्यते बीजाङ्कुरादिवदिति। विवृतं च शारीरिकभाष्यकारेण शङ्करस्वामिनापि तथैव। स्पष्टं चेदं 'नान्तो न चादिर्न च सम्प्रतिष्ठा'-इत्यस्य भाष्ये विस्तरेण। तथा च संव्यवहर्त्तॄणामनादिनिधनत्वसिद्धेः किमस्थानं नोद्यते नानघमिदमिति। अन्यच्च—अग्नि—वायुरविभ्यस्त्वित्यादिना भवदीयाभियुक्तवाक्याद् वेदानामनादित्वादपि कथङ्कारं नानादिनिधनता प्रमाणादिव्यवहारस्य ?। न च विश्वस्य विहितत्वेऽपि विश्वविधातुर्विहितत्वमस्ति, येन न स्यात्तस्य प्रमाणादिव्यवस्थाभानं तस्य 'य सर्वज्ञ' इत्यनेन सर्वज्ञातृत्व-सर्वविचारयितृत्वेनाभिधानात्। न चासौ न सव्यवहर्त्ता 'नामरूपाभ्यां व्याकरवाणी'तिवाक्यात्, तद्वाक्यस्यैव व्यवहारमूलत्वात्। यदि च विश्वविधाताऽनादिर्व्यवहारश्च किमित्ययुक्तमाभात भवतामत्र, येन प्रेर्यते इयत्।

ननु विश्वेश्वरो विश्वं विधित्सुः स्वयमेव तद्रूपतया परिणमति १, प्रकृतिं वा तन्मूलभूतां सूत्रयति २, स्वयं वा कुम्भकारवज्जगन्नियन्त्रणादि करोति ३, प्रलयकालीनावस्थितिमन्तं परमाणुसमूहं त्रुटिसमूहं वोपादाय तत्प्रभावादेवमेव भवति ४ तददृष्टं वा भवति तेनैव व्यवह्रियते ५, तदुपदर्शिताध्वादरानादरकृताऽदृष्टवैचित्र्योपनतमेतदिति ६, वा तस्य कर्त्तृत्वं गीयते इति विचारणीयं विचारवाचस्पतिभिर्मध्यस्थवृत्तकरणीयं विकल्पषट्कम्। यदि तावत् सच्चिदानन्दमयत्वाद् ब्रह्मण सत्प्रधानस्य जडीभाव, चित्प्रधानस्य जीवत्वम्, आनन्दप्रधानस्य ब्रह्मत्वं प्रतिजानाना आद्यं विकल्पं संश्रयन्ते, तर्हि विचारणीयमेतावदेव यदुत-तत्प्रधानाऽन्यगौणभवनं स्वाभा-

विकं प्रयत्नजन्यं वा ? । आद्ये, न कर्त्तृता, स्वाभाविकस्य कारणानिबन्धनत्वात्। अनित्यं हि कादाचित्कत्वात् कारणकल्पितं भवेत्, न च भवेत्तथा स्वाभाविकमिति जगतोऽनादितैवैत्रम् । प्रयत्नजन्यत्वे तु प्रयतमानः कृतार्थः सन्नितरथा वा प्रवर्त्तेत ? आद्ये, तत्ताहानिः । अन्त्ये च न कारणयोग्यतैव । स एव च विधेयः स्यादितरवत् तथात्वे । अन्यच्च स गौणमुख्यभावः कथं भवेदितरवस्तुयोगाभावे प्रथमतः परिपूर्णत्र्यात्मकत्वात् उभयथापि प्रारम्भाभावो विश्वस्य । किञ्च प्रयोजनं तस्य सम्पूर्णत्र्यात्मकस्य तथा तथा परिणतौ । त्र्यात्मकत्वेऽपि च स्पष्टैवाऽनादिता त्रयाणां ब्रह्मजीवाजीवानाम् । न च वाच्यं समुद्रस्यैकरूपस्यापि भवन्त्येव विचित्रा वीचय इति । तासां वाय्वादिसंयोगहेतुकत्वान्नहि भवति शान्ते वायौ कल्लोललेशोऽपि । यथा भाजनोदके । तन्नेतरयोगयोगाभावे विचित्रता कथञ्चनापि सम्भविनी । न चेतरदपि जन्यते तेन, चतुर्थवस्तुस्वीकारापत्तेः । स्वीकारेऽपि च तस्य ब्रह्मरूपत्वे चतुर्गुणात्मकताप्रसङ्गः । इतरथा चाकारणं वार्योद्भव ब्रह्मणो निमित्तकारणत्वेन स्वीकारात् । तन्न स एव तथा तथारूपतया परिणमति योग्यो विकल्पो विकल्पाननुवर्त्तयितुम् । तन्न ब्रह्मविवर्त्तोयं दृश्यमानः पदार्थप्रकरः । 'आत्मन आकाशः सम्भूतस्तस्माद्वायु'रित्यादिका प्रक्रियापि स्वच्छन्दमुद्भूता न प्रमाणीभावमाप्नोति विद्वत्पर्षदि । वायोराकाशे जायमानत्वं, न तु ततस्तथा । वायोरपामुद्भवस्य यन्त्रद्वारा प्रत्यक्षसिद्धत्वात् । तत्र त्वग्नेरपि इति । अथ चेत् 'मयाध्यक्षेण प्रकृतिः सूयते' इति, 'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते' इत्यादि । तथा 'मायां तु प्रकृतिं विन्द्यात् मायिनं तु महेश्वर'मित्यादि वाक्याद्यदि प्रकृतिद्वाराऽसौ विधातृत्वेन कक्षीक्रियते द्वितीयविकल्पाङ्गीकारेण, तदापि वचनीयमवचनीयवाङ्मयतत्त्वविदा वचनीयम् । यतः सा प्रकृतिरपि नित्याऽनित्या वा ? । आद्ये, कथं सा तेन विहिता विधात्रा ? कथं च नार्वागनन्यवनीधरादिप्रादुर्भावः ? इतरकारणा-

भावाच्चेत्, किं तत् ? परमात्मन इच्छा चेत्, किं सा पूर्वं नाधुना च किमुत्पन्ना ? स्वभावाच्चेत्, कथमसौ निर्निमित्तकत्वादनित्यो भवेद् भावे वा कथं न तद्वतोऽनित्यतामनापाद्य स्वसंसर्गेण स्थेयात् । किञ्च नाधुना तत्स्वभावत्वादेवासौ सृजति तामपूर्वामपूर्वां ?, सर्जने सृष्टेरानन्त्यं स्याच्च नभसोऽपि सङ्कीर्णताम्। अन्त्ये तु प्रकृतेरजत्वमेव ननाश काकनाशम् । अपरं च किमेषा मूर्त्ताऽमूर्त्ता वा ? । आद्ये, कथं मूर्त्तप्रादुर्भावोऽमूर्त्तात् ? प्रत्यक्षविरुद्धोपि श्रद्धेयो त्रिगुणाऽहङ्कारादि प्रक्रमोऽप्यप्रमाणक एव। नह्यहङ्काराद्भवति किञ्चिन्निमित्तभावस्तु नैवात्रेष्यते। तथात्वेऽन्यमूर्त्तपदार्थाभ्युपगमप्रसङ्गात् । एवमेव शब्दविवर्त्तोपि न युक्तिक्षमः । अकारादेरन्तरा निरन्तरान् भक्तान पृथिव्याद्युद्भवस्य कथमपि श्रद्धातुमनर्हत्वात् परेषाम् । अन्त्ये, कथं सा तत एवोद्भवेत् ? मूर्त्तत्वात् तस्याः । मूर्त्तस्य मूर्त्तोपादानत्वात् । कथं चैकरूपायाः प्रकृतेर्विचित्रवस्तूनामुद्भवो हीनोत्तममध्यमानाम् ?

अथ कुलालः मृदेकरूपानपि अनेकरूपान कपालकुशूलादीन् करोति विचित्रांस्तथाऽयमपि चेत् । नेदं युक्तम् । तत्राऽल्पबहुत्वादिपरिमाणप्रमितमृत्पिण्डोपादानताऽध्यक्षं सिद्धैव । न त्वत्र । अत्र तु जीवत्वेन सत्त्वादिसाम्येन च समावस्थत्वात् । न च घटादय सुखदुःखादीनामुपभोक्तारोऽत्र तु तदेव तत्त्वं । मूर्त्तं मकर्मा च चक्रजीवको न त्वयम् । अपि च-कुलालनिर्वर्त्तित भाण्डमात्र तदुपभोक्तृविचित्रादृष्टवशेनैव । अत्र तु नैव तत् । सति च तस्मिन् किमेतेन ? । तत्प्रेरित ददाति फल चेत् स्पष्टैव कर्मणामफलता । तस्य च निमित्तता अकारणसुखदुःखविधानेन दुर्जनताया अत एवोक्त—

'अपकार. प्रेसाद्यै कस्तस्य कृत सुरादिभि किं वा ? ।
संयोजिता यदेते सुखदुःखाभ्यामहेतुभ्याम् ॥१॥ तथा

भवसम्भवदुःखकरं निष्कारणवैरिणं सदा जगतः ।
कस्तं व्रजेच्छरण्यं सूरि. श्रेयोर्थमतिपापम् ॥२॥ इत्यादि ।

अदृष्टस्य सफलत्वे च किं तेनान्तर्गडुना, भक्तिमात्रत्वात् तत्कर्तृ तावादस्य । तदिदमाहुः पूज्याः—

'फलं ददाति चेत् सर्वं, तत्तेनेह प्रचोदितम् ।
अफले पूर्वदोषः स्यात्, सफले भक्तिमात्रता ॥१॥

अत्र पूर्वदोषो विचित्रे कर्मणि जन्तूनां प्रवर्त्तने को हेतुरीशस्य ? न कोपीत्यनर्थक एव कर्त्तृत्वाद् :खादिकारणप्रवर्त्तकत्वात् स्पष्टोऽपकारिणेश्वरः इति निर्हेतुका वा प्रवृत्तिः सोऽत्रापि कर्मणो निष्फलत्वस्वभावात्तदवस्थ एवेति । केचित्तु परमेष्ठिनमनभ्युपगच्छन्तः स्वयमेव प्रकृतिजातां जगत्युत्पत्तिं प्रचक्षते, तेऽपि क्रमेणानेनैव निरस्याः। यतो सापि 'नित्ये'त्यादि सर्वं वाच्यम् । न चाचेतना प्रकृतिः वेत्त्यदृष्टपरिमाणं येन जगज्जन्तुयोग्यायोपभोगायोपयुज्येत । न च सत्त्वरजस्तमःसाम्यावस्थालक्षणा नित्या प्रकृतिरपरिणममाना किमपि तृणकुब्जीभावादिकमपि कर्त्तुमला स्यात् । अप्रच्युतानुत्पन्नस्थिरैकस्वभावत्वाच्च नित्यस्य । यदि सा कुर्यादहङ्कारादिकपरिणतिं स्वरया, कथमिव स्यान्नानित्या ? कथं च श्रद्धेय प्रत्यक्षादिविरुद्धां गुणेभ्यो द्रव्योत्पत्तिरुद्भवतीत्येवरूपां प्रक्रियां वर्णयन्ती श्रुतिगीरद्रावयेद्भावुक तत्त्वमिति । किञ्चापरिणामिन आत्मन ससव्य तृतीयवेदिनमिवाभिनवविकाररूपतनयजननयोग्यतामादधं त सा वनितेव प्रकृतिः कथं ? कथं विदधीत चाऽकर्तुर्भुक्तभोगिन आत्मनो वियुक्तता स्वनिवृत्त्या । क्षीरादिदृष्टान्तोपि न कथञ्चनापि युक्तियुक्ततामादधाति त प्रणिगद्यमानः । यतः प्रथमं न तन्नित्यं, न च न तद्भिन्न द्रव्य, न च तत् स्वयं प्रकृतिवत् परिणमति, न चानुपगृहीत वा परिणमति, तत् कथमिव तयोः साम्यं भवेत् । शेषं पूर्ववदेव ।

ये तु तृतीयप्रकृतिमन्तर्मिव तृतीयविकल्पं सञ्चयन्त्य त्मतनया

कल्पां वुद्धि अन्ववायवृद्धयभीप्सवस्तेन लभन्ते किमपि स्वेप्सित-मर्थं विना योग्यवस्तु विनाशम् । यतस्ते तावद्विभिन्नविभिन्न-मतानुगा एव । एके तदाहुः—

तस्मिन्नेकार्णवीभूते, नष्टस्थावरजङ्गमे ।
केवलं गह्वरीभूते, प्रणष्टोरगराक्षसे ॥१॥

नष्टामरनरे चैव, महाभूतविवर्जिते ।
अचिन्त्यात्मा विभुस्तत्र शयानस्तप्यते तपः ॥२॥

तत्र तस्य शयानस्य, नाभौ पद्मं विनिर्गतम् ।
तरुणार्कमण्डलनिभं, हृद्यं काञ्चनकर्णिकम् ॥३॥

तस्मिँश्च पद्मे भगवान्-दण्डकमण्डलुयज्ञोपवीतमृगचर्मवस्त्रसंयुक्तः ।
ब्रह्मा तत्रोत्पन्नस्तेन जगन्मातरः सृष्टाः ॥४॥

अदितिः सुरसङ्घानां दितिरसुराणां मनुर्मनुष्याणाम् ।
विनता विहङ्गमानां माता विश्वप्रकाराणाम् ॥१॥

कद्रूः सरीसृपाणां सुलसा माता तु नागजातीनाम् ।
सुरभिश्चतुष्पदाना-मिला पुनः सर्वबीजानाम् ॥

प्रभवस्तासां विस्तरमुपागतः केचिदेवमिच्छन्ति । वैष्णवी-यमिदम् । स्मार्त्तं त्विदम्—

आसीदिदं तमोभूत-मप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमविज्ञेयं, प्रसुप्तमिव सर्वतः ॥१॥

ततः स्वयम्भूर्भगवा-नव्यक्तो व्यञ्जयन्निदम् ।
महाभूतादिवृत्तौजाः, प्रादुरासीत्तमोनुदः ॥२॥

लोकानां स च वृद्ध्यर्थं मुखबाहूरुपादतः ।
ब्राह्मणं क्षत्रियं चैव, शूद्रं च विन्यवर्त्तयत् ।।३।।

पौराणिकानां त्विदं-'यदा न किञ्चिदपि वस्त्वासीत् पदार्थ-शून्योयं संसारस्तदा ब्रह्माऽप्स्वण्डमसृजत् । तस्माच्च क्रमेण वृद्धाद् द्विधाभावमुपगतादूर्ध्वाधो विभागोऽभूत्तन्मध्ये च सर्वाः प्रकृतयोऽभूवन् । एवं पृथ्व्यप्तेजोवाय्वाकाशसमुद्रसरित्पर्वतमकराकरनिवेशादिस्थितिरभूत् ।

औपनिषदिकास्त्वन्यदन्यद्विविधं प्रचक्षते परस्परासम्बद्धम्—

'ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः ।
तदेव शुक्रं तद्ब्रह्म, तदेवामृतमुच्यते ।।१।।

तस्मिँल्लोकाः श्रिताः सर्वे' । इति कठोपनिषदि ।

प्रश्ने तु 'प्रजाकामो वै प्रजापतिः स तपोऽतप्यत स तपस्तप्त्वा स मिथुनमुत्पादयते रयिं च प्राणं चेत्येतौ मे बहुधा प्रजाः करिष्यत' इति ।

मुण्डके-तपसा चीयते ब्रह्म ततोऽन्नमभिजायते ।
अन्नात्प्राणो मनः सत्यं, लोकाः कर्मसु चामृतम् ।।१।।

तैत्तिरीये-असद्वा-इदमग्र आसीत् ततो वै सदजायत । ऐतरेये-आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चनमिषत् स ईक्षत लोकान्नु सृजा इति ।।१।। स इमाँल्लोकानसृजत अम्भोमरीचीर्मरमापोऽदोम्भः परेण दिवं द्यौः प्रतिष्ठान्तरिक्षं मरीचयः । पृथिवी मरो या अधस्तात्ता आपः ।।२।। स ईक्षते मे नु लोकाः लोकपालान्नु सृजा इति । सोऽद्भ्य एव समुद्धृत्यामूर्छयत् ।।३।। तमभ्यतपत्तस्याभितप्तस्य मुखं निरभिद्यत यथाण्डं मुखाद्वाग्वाचोग्निर्नासिके निरभिद्येतां नासिकाभ्यां प्राणः प्राणाद्वायुरग्नी निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्राद्दिश-

स्त्वङ् निरभिद्यत त्वचो लोमानि लोमभ्य औषधिवनस्पतयो हृदयं निरभिद्यत हृदयान्मनो मनसश्चन्द्रमा नाभिर्निरभिद्यत नाभ्या अपानोऽपानान्मृत्युः शिश्नं निरभिद्यत शिश्नाद्रेतो रेतस आपः। इत्यादि।

छान्दोग्ये–प्रथमं तावत् प्रजापतिर्लोकानभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयी विद्या सम्प्रास्रवत्तामभ्यतपत्तस्या अभितप्ताया एतान्यक्षराणि सम्प्रास्रवन्त भूर्भुवःस्वरिति। तान्यभि (भ्य) तपत्तेभ्योऽभितप्तेभ्य ॐकारः सम्प्रास्रवत्। इत्यभिधाय तृतीयाऽध्याये तृतीये प्रपाठके-असदेवेदमग्र आसीत्तत्सदासीत्तत्समभवत्तदाण्डं निरवर्त्तत तत्संवत्सरस्य मात्रामशयत तन्निरभिद्यत ते आण्डकपाले रजतं च सुवर्णं चाभवतां॥१॥ तद्यद्रजतं सेयं पृथिवी यत् सुवर्णं सा द्यौर्यज्जरायु ते पर्वता यदुल्बं स मेघो नीहारो या धमनयस्ता नद्यो यद्वास्तेयमुदकं स समुद्रः॥२॥ अथ यस्तदजायत सो सावादित्यस्तं जायमानं घोषा उलूलवो नूदतिष्ठन्त सर्वाणि च भूतानि च सर्वे च कामास्तस्मात्तस्योदयं प्रति प्रत्यायनं प्रतिघोषा उलूलवो नूत्तिष्ठन्ति सर्वाणि च भूतानि च सर्वे च कामाः॥३॥ तुर्येऽध्याये चतुर्थे सप्तदशे खण्डे तु-प्रजापतिर्लोकानभ्यतपत्तेषां तप्यमानानाँरसान्प्रावृहदग्निं पृथिव्या वायुमन्तरिक्षादादित्य दिवः॥१॥ यावदग्नेस्तत्वोवायोर्यजूंषि सामान्यादित्यात्॥२॥ षष्ठेऽध्याये प्रथमे द्वितीयखण्डे तु–सदेव सौम्येदमग्र आसीत एकमेवाद्वितीयं॥२॥ तदैक्षत बहु स्या प्रजायेयेति तत्तेजोऽसृजत तत्तेज ऐक्षत बहु स्या प्रजायेयेति तदपोऽसृजत तस्माद्यत्र क्व च शोचति स्वेदते पुरुषस्तेजस एव तदध्यापो जायन्ते॥३॥ ता आप ऐक्षन्त बह्वयः स्याम प्रजायेमहीति ता अन्नमसृजन्त तस्माद्यत्र क्व च वर्षेति तदेव भूयिष्ठमन्नं भवत्यद्भ्य एव तदध्यन्नाद्यं जायते।४॥ इति द्वितीयः खण्डः। तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्यण्डजं जीवजमुद्भिज्जमिति॥१॥ सेयं दैवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति। इत्यादि।

बृहदारण्यके प्रथमे तुरीये ब्राह्मणे-आत्मैवेदमग्र आसीत् पुरुषविधः सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्सोऽहमस्मीत्यग्रे व्याहरत् ततोऽहं नामाभवत् तस्मादप्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र उक्त्वाथान्यन्नाम प्रब्रूते यदस्य भवति स यत्पूर्वोऽस्मात् सर्वस्मात् सर्वान्पाप्मन औषत् तस्मात् पुरुष ओषति ह वै स तं योऽस्मात् पूर्वो बुभूषति य एवं वेद ॥१॥ सो बिभेत्तस्मादेकाकी बिभेति सहायमीक्षाञ्चक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति तत एवास्य भयं वीयाय कस्माद्ध्यभेष्यद् द्वितीयाद्वै भयं भवति ॥२॥ स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत् सहैतावानास यथा स्त्रीपुमांसौ संपरिष्वक्तौ स इममेवात्मानं द्वेधा पातयत्ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्धबृगलमिव स्व इति ह स्माह याज्ञवल्क्यस्तस्मादयमाकाशः स्त्रिया पूर्यत एव तां समभवत्ततो मनुष्या अजायन्त ॥३॥ सा हेयमीक्षांचक्रे कथं नुमात्मान एव जनयित्वा सम्भवति हन्त तिरोऽसानीति सा गौरभवदृषभ इतरस्तां समेवाभवत्ततो गावोऽजायन्त वडवेतरा भवदश्ववृष इतरो गर्दभीतरा गर्दभ इतरस्तां समेवाभवत्तत एकशफमजायताजेतराभवद्बस्त इतरोऽविरितरा मेष इतरस्तां समेवाभवत्ततोऽजावयोऽजायन्तैवमेव यदिदं किञ्च मिथुनमापिपीलिकाभ्यस्तत्सर्वमसृजत ॥४॥ सो वेद ह वाव सृष्टिरस्म्यहं हीदं सर्वमसृक्षीति ततः सृष्टिरभवत् सृष्ट्यां हास्यै तस्यां भवति य एवं वेद ॥५॥ अथेत्यभ्यमन्थत्स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत् तस्मादेतदेतदुभयमलोमकं अन्तरतोऽलोमका हि यो निरन्तरं तद्यदिदं तमाहुरमुं यजामुं यजेत्येकैकं देवमेतस्यैव सा विसृष्टिरेष उह्येव सर्वे देवा अथ यत्किंचेदमार्द्रं तद्रेतसोऽसृजत तदु सोम एतावद्वा इदं सर्वमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नादः सैषा ब्रह्मणोऽतिसृष्टिः । यच्छ्रेयसो देवानसृजताथ यन्मर्त्यः सन्नमृतानसृजत तस्मादतिसृष्ट्या हास्यै तस्यां भवति य एवं वेद ॥६॥ तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियतेऽसौ नामायमिदं रूप इति ।

सूर्योपनिषदि पुनः सूर्याद् वै खल्विमानि भूतानि जायन्ते ।

वह्वृचोपनिषदि तु-देवी ह्येकाग्र आसीत सैव जगदण्डमसृजत् । कामकलेति विज्ञायते शृङ्गारकलेति विज्ञायते । तस्या एव ब्रह्मा अजीजनत्, विष्णुरजीजनत्, रुद्रोऽजीजनत्, सर्वे मरुद्गणा अजीजनन्, गान्धर्वा अप्सरस. किन्नरा वादित्रवादिन समन्तादजीजनन्, भोग्यमजीजनत सर्वमजीजनन्, सर्वं शाक्तमजीजनन् अण्डजं स्वेदजमुद्भिज्जं जरायुजं यत्किंचैतत्त प्राणिस्थावरजङ्गमं मनुष्यमजीजनत सैषा परा शक्ति । इत्याद्यनेकधा कपोलकल्पनाकल्पितम् यद्वा तद्वा जगु । पर आपौराणिकौपनिषद्वाना सर्वेषां तेषामिदमेकं परस्पर न विसंवदते यदुत-ब्रह्मादिकृतमिद स च व्यवस्थया विदधाति विश्व विश्वम ।

अत्र विचार्यते तावद्विचारचतुराणां विचारणीयं-यदुतोत्पन्नोऽसौ न वा ? । ( न तावदुत्पन्नस्तथात्वे जगदेव तथाऽस्तु ) आद्ये च कथं तदुत्पत्तिः ? स्वयं चेद्, अस्तु जगतोप्येवं तस्येव अनादिता च तस्यापि। परतश्चेत सोपि कथ कुत इत्यनवस्थावल्लरीमतिरभोमण्डलेऽयमान्ती क्व विश्राम्येत् । अन्यच्च-अभून्न चेज्जगत् कुत्राऽसौ क्व च रव्यादि निष्पादित तापित शाण्डादि क्व च ताप । केन निष्पादित मृदादिनेव घटादिरण्डादि । कथं चर्ते परमाणुप्रचय तत्, सोऽभूत् चेत्, कथ विप्रकीर्ण एव नाशितः प्रलयकाले सयोगेन चेत्, न तावत् कुलालापसदोऽपि स्वकृतानि भाण्डानि विनाशयति । न च वार्यपि स्वपोषितत्वाऽधो नयति काष्ठ, मन्यते यन्मा विनाड्क्षीदेतदिति । अत एवोच्यते विज्ञैः—

यदि तेन कृतो लोको भूयोऽपि किमस्य संहृय. क्रियते ।
उत्पादित. किमर्थं यदि सक्षेपणीय एवासौ ॥१॥

कश्च गुणोऽस्य प्रलयकरणेन परमाणुपुञ्जरय, को ह्येवमुत्पाद्यतयाभिमतं विज्ञो विनाशयेद्वर्त्तमानम् । अनुत्पन्नश्चं दनादित्वादस्तु जगदपि तथैव का हानिः । कार्यत्वादिकं तु निराकरिष्यत एव । यद्वा-कथं न तस्यापि कार्यता, नित्यत्वाच्चेदितरेतराश्रयः । सिद्धे हि नित्यत्वे कार्यताभावः तस्मिंश्च सिद्धे नित्यतासिद्धिः । अथवा अस्तु जगतोऽपि कार्यतारहितत्वम्, अन्यथा स कुह्यास्थादर्वाक् सृष्ट्युत्पत्तेः, क्व वा वर्णितमेकार्णवतादि सृष्ट्यनुत्पत्तेः स्थितमिति विलोकने विचार-रहितेऽर्थेऽङ्गीकृते योग्यतामनुभवत् खविलोकनं भवतामपि भवत् केन वार्येत ? आकाशे चेत् जीवन्तु पर स कुतोऽनादिर्मत । आत्मन आकाशः सम्भूत इति त्वौपचारिकमेवोत्पादवर्णनम् । अमूर्त्तस्योत्पादा-भावान्न तस्योपादानकारण किञ्चिदस्ति, येनोत्पाद्येताऽसौ निर्मयत्वा-दनवयवित्वाच्चेन, सत्यमुक्त परमालोचयन्त्वेवं जीवे, सोप्येवंविधो न वा ? यद्यपि न योग्यमुक्तमनवयवित्वादिति । इहाकाशे इदमिहाकाश इदमित्यवयवप्रतीतेर्घटादेर्महतो यद्यनेका अवयवा तर्हि किं न स्युस्त-तोऽतिमहत आकाशादेः, परमन्यदेतत् । जीवा अपि 'न जायते म्रियते वा विपश्चिद्'ति वाक्यात् नित्या एवेति न ते उत्पादिता इति चेत् ते किं सकर्माणोऽभूवन्नकर्माणो वा ? आद्ये, तत्कर्म क्व कृत ? पूर्वसर्गे चेत्, कथमेतावत्कालं न फलितम् । विपाककालेऽवश्य फलदानस्वभावं हि तत्, अन्यथा तदभ्युपगमवैयर्थ्यात् । पूर्वं यदि फलदानपट्वेव तदा-सीत् तदा नास्थूलशरीर उपभोगः कर्मणामिति बलात्कारेणाप्यायातं जगतोऽनादित्वम् । यदि च कर्मणां तत् सामर्थ्यं स्वयमीश्वरेण तद-पेक्षया दीयते चेत्, तानि शिखण्डीभूतानीति व्यपेक्षेश्वरस्य तेषां, तथात्वे च सर्वशक्तिसमन्वितस्य न करुणा कापि, येन दुःखदुर्गदौर्गत्यविह्वलं जनं सृजति, जगति च बहव एव दुःखभोगिनो, विशेषेणेक्ष्यते चेत् न कोऽपि सर्वथा सुखनिधानम् । कथं च तेन प्रथमत एव दुष्कृत-करणकाले एव न निवारिता जन्तवः ? का चैषा मदमत्तता ? यत् सत्यपि सामर्थ्ये दुराचारान् पाल्यानां नावनम् । न सा शक्तिः चेदी-

यतां जलाञ्जलिः सर्वैश्वर्यवादस्य । तथा च यद्गीयते—

ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः ।
ऐश्वर्यं चैव धर्मश्च, सहसिद्धं चतुष्टय ॥१॥ मिति ।

तदलीकमेव । अलीकगुणोत्कीर्त्तनेऽपि च स्पष्टैवातितीव्रा मृषावादितेत्यत्रबुद्धपूर्वमेव प्राज्ञानामस्तीति । शिक्षणायापि तत्करणमनुहरत्यनार्यक्रियां हास्यायाऽन्यप्राणिबाधनात्मिकाम् । यत सत्यपि शक्तिनिकरे कैषा पामरजनोचिता रीति ? स्वकृतत्वात्तस्य न तथात्वे चेद् बन्धः, कथं पुत्रवधे पितु. ? । अन्यच्च-तदर्थं चेत्, किमिति न चक्रेऽत्रैव नरकादिक प्रत्यक्ष, येन लोक कोऽपि न चार्वाकमतानुगो भवेत् । कोपि न च विदध्यात् पापलेशम् । नृपाज्ञामिव प्रतिक्षणमनुपालयेच्चान्त.करणत एव तदाज्ञां शेषामिव । कथ च न सोपि जगज्जीवदु.खीकरणान्नार्हति शिक्षाम् ? । कथं वा तद्भजनाद्भावुकभावुकोद्भवोभावुकानाम् । नहि न्यायकारिणां युक्तमेतद्यदुत-स्वसेवातोऽपराधकारिणां मुक्तिरन्यथाऽनपराधानामपि बन्ध इति । अन्यच्च-जीवैः कर्माणि स्वयं कृतानि तेन कारितानि वा ? । आद्ये, यथैवाशुभसमाचारादुपार्जितमशुभं तैस्तथोपभोगमपि तस्य कुर्याच्चेत्को दोष. । किञ्च तथात्वे प्राणवधादिकमेकस्य पूर्वकृताशुभकर्मविपाकभूतं यत्तदेवान्येषां नूत्नतरसमर्जनायेति न स्यान्नियम. । तस्य फलरूपत्वेनेतरस्येश्वरकारिताङ्गीकारात् । तथात्वे च पूर्वजन्मनीह परत्र च न कोपि कस्यापि कर्मणो बन्ध ईश्वरकारितत्वात् स्वयं तदकरणात् । तत् कैव कर्मबन्धस्थित्यभावे तत्फलदानस्थितिः । अन्यच्च-यदत्र विदधातीष्टं भवद्भ्योऽनिष्टं वा तच्चेदीश्वरकृतं, न तस्य शुभायेतरस्मै वा । स्वय कृत चेदाजन्म विनेश्वरेण प्राणिनां सम्पद्यते पूर्वकर्मानुसारेण शुभाशुभफलानुभवः तर्हि किमीश्वरेण ? । जीवस्य स्वयमज्ञत्वाद् गत्यन्तरे तादृशे निदधात्यसौ, यत्र स्वयं स्वकृतादृष्टफलोपभोगायालम्भूष्णु

स्याच्चेद्, योग्यमुक्त, परमुदीक्षणीयमेतत्, यदत्रैव जनुषि परकृतकर्मा-नुसारेणेतरेषामपरप्रेरण भवति वधाय दानाय वा परिणतिः केवल-कर्मसाम्राज्यात् तर्हि तेनैवैतस्यात्रागमने किमाश्चर्यम् । न च नोद्य कथमचेतनानि कर्माणि यथायोग्यं गत्यन्तरं प्रापयेत्तद्वन्तम्। लोहो-पललोहयोरचेतनेऽपि विनैव परप्रेरणा दृश्यते एवाकर्षस्तथा चोत्तम-मध्यमाधमकर्मणां वैचित्र्यात् किमिति न घटा प्राञ्चति यथार्हं गति-प्राप्त्यादि, येनादृष्टासम्भवितकल्पनागहने प्रवेश. प्रविष्टविवेकानाम्। अकर्मकत्वे च कथ नानुचितिपदवीमञ्चतीश्वरस्य, नेषां क्षित्यादित्वेन वैषम्यापादनम् । न चैकमप्यन्तरेण जीवेयुर्नरा' चिरयन्ते जीवायूनाम् । न च तान्यपि स्युरेकैकमन्तरा। तत्राकर्मभिरप्यात्मभि. सृष्टिसृष्टिः सृष्टि-सर्जनपटिष्ठोर्घटाकोटिमेति । किञ्च-प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते' इति न्यायात किमर्थमसौ यत्न आस्थीयत ईश्वरेण ? सति तस्मिन् स्पष्टैवाकृतार्थता । अन्त्ये च प्रेक्षापूर्वकारिताऽभाव.। न चेश्वरे न तद्दूषणं, निःस्पृहत्वेन गुणत्वादितिचेत्, तन्न वर, यतो निःस्पृहत्व परोपकाराय स्वोपकाराय वा स्यादत्र तु तस्य कृतार्थत्वादितरेषा-अल्पाना सुखविधानेऽपि बहूना दुःखजम्बालविमोहनाच्च न तल्लेशो-ऽपि । एतेन कैव तीर्थकृतां तीर्थप्रवर्त्तने फलप्राप्ति. ? अस्ति चेत्, स्वार्थपरायणता । नास्ति चेद्, नोत्तमनीत्यनुसारितेति मूढोल्लापो निरस्त । ते हि पूर्वजन्मन्येव परोपकारप्रवणैकान्त.करणतयाऽभान्त्सुः तीर्थकृत्कर्म प्रवचनप्रवर्त्तनायेति न तेषामकृतार्थता निष्फलारम्भता वा । प्रवर्त्तयति च शासनमजरमरणमभयकरं तृतीयौषधवत् सर्वगुण तदुदयेन । नामकर्मत्वाच्च न पराधीनतापत्तिरात्मगुणानाम् । न चायत्नं वेद्यते तत् कर्मेति दिक् । न चैवमीश्वरस्यास्ति कर्मलेशो-ऽप्यभ्युपगतो भवता । किञ्च-सर्वशक्तिमत ईश्वरस्य किमित्यसम्भ-विन्यण्डादिक्रियोपरकुरुते ? कथं च ततः प्रादुर्भावोऽस्य सचरा-चरस्य ? इति विचारयन्तां स्वयं विज्ञा । न ह्येवं कल्पनामात्रेण भवति पदार्थप्रादुर्भूतिः । कथ च सर्वथा नि.सङ्गस्येश्वरस्य भवेत

कल्पनाप्रसङ्गः कथं वा नाभूदर्वाक् नित्यत्वेनावस्थितत्वात्तस्य। नहि तस्य कल्पनासम्भवेऽस्ति कारणं किञ्चित्। करुणा तु पूर्वं निरस्तैव विधातुर्विधातृत्वे। कथं च कुर्यादसौ करुणया विदधानो लोकं दुःखदौर्गत्यदुर्योनिजन्मादिक्लेशविह्वलं, येनोद्भवे देताद्दृश उल्लापोऽनिवार्यं।

यदाहु:-दुःखदौर्गत्यदुर्योनि-जन्मादिक्लेशविह्वलम्।
जनं तु सृजतस्तस्य कृपालो: का कृपालुता? ॥१॥

कथं च नामार्वाक् सृष्टेर्जनाभावाद् दुःखसम्भवो, येन करुणोद्भवः सम्पद्येत सम्भावनापदम्। अपरं च किमसौ शरीरमुपादायैतन् करोत्यन्यथा वा?। आद्ये, कर्माणुरहितः कथमुपादत्ते? सर्वदा वा किमिति नोपादत्ते? कियत्परिमाणं वा तद्? जगत्परिमाणे तस्मिन्नुपादीयमाने अन्यकरणीयावकाशाभाव। परिमाणवति च सर्वव्यापित्वाभावेन सर्वत्र क्रियाविरहः। तथा च तत्र स्वयमेव क्रियाऽभावः। अन्यकर्माणूपादाने तु स्पष्टैव कृतनाशाकृताभ्यागमप्रसङ्गापत्तिः। सूक्ष्मशरीराभ्युपगमे च स्पष्टैव स्थूलपदार्थभूभूधरसरित्सरित्पत्यादिकरणायाऽयोग्यता। स्थूलसूक्ष्मयोर्भेदाभावेऽस्त्येव सर्वेषामदृष्टसूक्ष्ममिति किं विश्वविधातृदूषणेन। विचारणीयमावश्यकमेतद्यदुत-विश्वविधात्रभ्युपगम्यश्चेत, कोऽसौ ब्रह्मा प्रजापति शक्तिः प्रधानं यावनीयो वा कोपि? यतस्तेप्याख्यान्ति-यदिष्टमीश्वरेण जायतामाकाशं, जातमवलोकितम् चारु। जायतामुद्योतो जातो वीक्षितः सुन्दरो दिवस इति चक्रेऽभिधा तस्य। अन्धकार उद्भवतु जातो, रात्रिरित्यभिदधे ताम् इत्यादि। यदि विहितमेव स्याद्विश्वं केनापि, किमिति स्वापलापिनस्तादृशानऽकरिष्यदसौ स्वासममहिम(मलि)म्लुचः? यदपि जेगीयते श्रुतिस्मृत्यादि। तत्र विचार्यते तावत्-को ब्रह्मा प्रजापतिः-शक्तिर्वा। तत्र प्रश्नोपनिषदि दृश्यता, यदाह तत्र-संवत्सरो वै प्रजापतिस्तस्यायने दक्षिणं चोत्तरं च ॥९॥ मासो वै प्रजापतिस्तस्य

कृष्णपक्ष एव रयि शुक्लः प्राणः ॥१२॥ अहोरात्रो वै प्रजापतिस्तस्या-हरेव प्राणो रात्रिरेव रयिः ॥१३॥ अन्नं वै प्रजापतिस्ततो ह वै तद्रे-तस्तस्मादिमा. प्रजा. प्रजायन्त इति ।

बृहदारण्यकेऽपि—स एव सवत्सर प्रजापतिस्तस्य रात्रय एव पञ्चदश कलासु चैवास्य षोडशी कला । अत्रोहनीयमूहावता यदुतै-तत् कर्तृभिस्तावदनिर्णीतो य. कोऽपि प्रजापतिर्निर्दिष्टो, येन विकल्प-यति सवत्सरादिभिर्न च निर्णीते भवत्येवायमुल्लेख. । अन्ततो गत्वा चान्नमेव प्रजापतितया निर्दिदेश, यन्न केनापि न कक्षीक्रियते तदाधार-त्वात् सर्वेषां, तच्चावश्यमेव प्रजारक्षणतत्परमिति माननीयं विद्वद्भि । कल्पनाकल्पितत्वं च न तैर्धूर्तै प्रच्छन्नमैन्द्रजालिकानामितरेषामिव किन्तु तद् ये हवै तदिष्टापूर्त्ते कृतमित्युपासते ते चान्द्रमसमेव लोक-मभिजायन्ते त एव पुनरावर्त्तन्ते. तस्मादेते ऋषय. प्रजाकामाः दक्षिण प्रतिपद्यन्ते एष हवै रयिर्य. पितृयाणः ॥६॥ अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्यादित्यमभिजायन्त एतद्वै प्राणा-नामायतनमेतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्त्तन्त इत्येष निरोधः । विलोक्यता विद्व सोऽत्र स्पष्टं वावचत्येते—कृतमित्युपासनं दक्षिणायने तपोब्रह्मचर्यादि स्वीकरणं च दृष्ट्वातितरामातरा दृष्टि सूर्ये प्रजापतितया निवेशयन्ति । एवमेव मासस्य प्रजापतित्वे तस्मादेते ऋषयः शुक्ल इष्टिं कुर्वन्ति, इतर इतरस्मिन् । रात्रेः प्रजापतित्वे प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते । ब्रह्मचर्यमेव तद्यद्रात्रौ रत्या संयुज्यन्ते । अत्रापि स्पष्टमेव निरटङ्कि स्वाभिप्रायः सूरिभिर्मा-सरजन्योः प्रजापतिकल्पनायाम् । यद्यपि च रात्रौ रत्या संयोजन प्रतिपादित स्वेषामपि प्रतिकूलं पर तदत्र प्रस्तावे प्रजोपपादनस्य प्रक्रान्तत्वादनिवार्यं गृहमेध्यपेक्षया तस्यान्यकान्तां विहाय स्वदार-सन्तोषेण स्वदाराभिगमरूपस्य वा ब्रह्मचर्यरूपत्वमिति युक्तमेव । अत मुण्डकोपनिषदि-'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते । अन्ना-

त्प्राणो मन मर्त्यं लोका. कर्मसु चामृत'मित्यनेन ब्रह्मतपःफलतयाऽ-न्नमभिप्रेतम्। न चैनं प्रजापतिं नाङ्गीकरोति कोऽप्याबालगोपालम्। एतदेव च सर्वविधानसावधानम् इत्यपि युक्तमेव । यद्यपि च विरुद्ध' वर्वर्त्ति इद यत्-ब्रह्मणस्तपसा जातायां पुष्टाविति तत्कारणस्य स्पष्टमेवेतरस्यावलोकनात् अपलप्यते चेत् प्रत्यक्ष कुलक्रमायाता नीति-रेषा भवतां यदुत-भ्रान्त प्रत्यक्षमिति कथमन्यथा जगन्मिथ्या प्रपञ्चो-ऽसन्नित्याद्यवक्ष्यन् भवत्पूर्वजाः। मा च त्वरिपत भवन्तो निर्णीयते भवदभिमतमपि ।प्रतिपादयाञ्चकुस्तावच्छान्दोग्ये-ऋषय. मनो ब्रह्मे-त्युपासीत । ४ । १८ । आदित्यो ब्रह्मेत्यादेश । १-१-२ बृहदारण्यके-इयं पृथिवी सर्वेषां भूतानां यावदमृतमिद ब्रह्मेद सर्वं । इमाः आप. (यावत) ब्रह्मेद सर्वं । अयमग्निः । अयं वायुः । अयमादित्य. । अय चन्द्र. । इय विद्युत् । अयमाकाश. । अय स्तनयित्नुः । अय धर्मः । इदं सत्य । इद मानुषम् । अयमात्मा सर्वेषां भूतानां मध्वस्यात्मनः सर्वाणि भूतानि मधु यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषो यश्चाय-मात्मा तेजोमयोऽमृतमयः पुरुषोऽयमेव स योयमात्मेदममृतमिदं सर्वम् ।

विलोक्यतां विचक्षणा जगन्निदानमीक्षणैर्वदन्ति यत्परे स्फुट-विहाय ब्रह्म नापरम्। न निश्चितं महर्षिभिर्यतो विकल्प्य देशित, क आग्रहस्तदा तदीयवाक्यसेविना ननु ॥१॥ आहुश्च पुन' वाग्वै सम्राट् परमं ब्रह्म । प्राणो वै सम्राट् परमं ब्रह्म । चक्षुर्वै सम्राट् परमं ब्रह्म । श्रोत्र वै सम्राट् परमं ब्रह्म । मनो वै सम्राट् परमं ब्रह्म । हृदय वै सम्राट् । सर्वेषां भूतानां आयतन हृदय वै सम्राट् सर्वेषां भूताना प्रतिष्ठा हृदये ह्येव सम्राट् सर्वाणि भूतानि प्रतिष्ठितानि भवन्ति हृदयं वै सम्राट् परम ब्रह्म नैन हृदयं जहाति सर्वाण्येनं भूतान्य-भिक्षरन्ति देवो भूत्वा देवानप्येति य एव विद्वानेतदुपास्ते ।

भृगुवल्ल्यामपि-अधीहि भगवो ब्रह्मेति तस्मै एतत्प्रोवाच अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति। विचार्यतां महाशया यदि अत्र न ब्रह्मत्वेन प्रतिपिपादयिषितं स्यादन्नादि, कथं प्राणं वाचमिति भवेद्वचनयुगलम्। प्रोक्तं चाग्रे अन्नं ब्रह्मेति। प्राणो ब्रह्मेति। मनो ब्रह्मेति विज्ञानं ब्रह्मेति। आनन्दो ब्रह्मेति।

श्रुतिरहस्यमिदं नहि निश्चितौ, जगति कौचन ब्रह्मप्रजापती।
श्रवणतत्परशान्तिकृते जगुर्ऋषय एव यथारुचि कल्पितौ ॥१॥

भो भोः कणादकपिलादय ! आश्रयध्वं,
किं ब्रह्म यद्विदधते जगतां व्यवस्थाम्।
युष्माकमेतदृषिभिर्गदितं पुरोक्तं,
नेत्रे निमील्य पिबताऽऽयतिसौख्यदातृ ॥२॥

आश्रित्य विश्वजननाय परं महेशं,
दैवं विना च भवतीह न कार्यजातम्।
तत्त्वाश्रितं कुरुत किन्तु महेश्वरेण
नाऽजागलस्तननिभेन निजेष्टसिद्धिः ॥३॥

अथ चतुरचातुर्यावजातदिवस्पतिपाठकाः संश्रयध्वं यूयं योगिन इव तुर्यावस्थां तुरीयविकल्पं स्वमनोरथपूर्त्तये यदचिन्त्यप्रभावोऽसौ 'महतो महीयानि'त्यादिवाक्यादिति चेद्. भवतु चिन्तामण्यादिवत् स्वमहिमाधरीकृताखिलविश्वस्य विश्वाधिपतेः सामर्थ्यं तादृशं, परं न तदृते आराधकं स्यादिति विद्यमानस्यैव जगतस्तत्प्रभाव इत्यत्युपयोगम्। अन्यथेच्छाप्रादुर्भावादिना पूर्वोक्तदोषानतिवृत्तेः। न च तस्य वीतरागत्वाद् वैषम्यकारणं किञ्चिदिति, भाव्यं च तथा सति जगता वैषम्यरहितेनेति नासावप्यर्हति घटनाकोटिम्। अथ विज्ञायाऽसदाग्रहं यथार्थपञ्चमुखाराधनपटिष्ठतयैवमाचक्षतोरीकृत्य पञ्चमं विकल्पं यन्-

महेश्वर एव तावद् य. सर्वज्ञः स सर्वविदिति श्रुत्या सर्वज्ञ । सर्वज्ञश्चातीतानागताद्यद्धावेत्तृत्वादेव । तथा अवाप्तवेदनश्चावश्यम्भाविनी स्थिति जानाति पर्य्यालोचयति च । यतो नहि तदज्ञातमस्त्यभूद् भविष्यद्भवति वा, सर्वज्ञतान्नतेः । परिणमति च जगति तथैव यथा अनेन ज्ञानेनावभासितम् । ज्ञान च तदधीनमेवेति, यथा यथा परिणमति तस्य ज्ञानं तथा तथा विश्वेक्ष्यविश्वान्तर्वर्त्तिपदार्थप्रकरोऽप्यावर्त्तते इति साहचर्येणाऽनन्यथासिद्धनियतपूर्ववृत्तितया भवत्येव तद्विश्वविधेः कारणं ज्ञानम् । न च भिन्न तत्ततो, गुणानां द्रव्याभेदेन व्यवस्थानात् ।

अन्यच्च-श्रुतिषु भवान्तरगमादौ नेक्ष्यते तन्नामापि । आदिमर्गसाधनत्वं तु कल्पितमर्वाग्व ज्ञातम, उत्पत्तिश्च जीवस्य प्रेत्य प्रवेदितैवमृषिभिर्यथाहुः-इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति स उल्बावृतो गर्भो दश वा नव वा मासानन्त शयित्वा यावद्वाथ जायते ॥१॥ स जातो यावदायुषं जीवति त प्रेत दिष्टमिताग्नय एव हरन्ति यत एवेतो यतः सम्भूतो भवति ।२। इति नवम खण्ड । अथ य इमे ग्राम इष्टापूर्त्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान् षड् दक्षिणैति मासाँस्तान्नैते संवत्सरमभिप्राप्नुवन्ति ॥३॥ मासेभ्यः पितृलोक पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति ॥४॥ तस्मिन् यावत्सम्पातमुषित्वाथैतमेवाध्वानं पुनर्निवर्त्तन्ते यथैतमाकाशमाकाशाद्वायु वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवति ॥५॥ अभ्र भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहि-यवा ओषधिवनस्पतयस्तिलमाषा जायन्ते तो वै खलु निष्प्रपतरं यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति ॥६॥ तत्र इह रमणीयचरणा अभ्यासो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा । अथ य इह कपूयचरणा अभ्यासो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं-वा चण्डालयोनिं वा ॥७। अथैतयो पथोर्न कतरेण च न

तानीमानि क्षुद्राण्यसकृदावर्त्तीनि भूतानि भवन्ति, जायस्व म्रियस्वेत्येतत्तृतीय स्थानं तेनासौ लोको न सम्पूर्यते तस्माज्जुगुप्सेत तदेष लोक । एतदेव बृहदारण्यकेऽपि षष्ठेऽध्याये द्वितीये ब्राह्मणे । नात्र ब्रह्मनामाप्यनुश्रूयते, किमु तत्कर्तृत्वम् । न केवलं भवावताराधिकारे एव न श्रूयते, किन्तु ब्रह्मत्वावाप्तावपि न तत्कर्त्तृत्वमनुगीतम् । तथा च श्रुति-तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धातप इत्युपासते, तेऽर्चिषमभिसम्भवत्यर्चिषोऽह्रह्न आपूर्यमाणपक्षमापूर्यमाणपक्षान्यान्षडुदङेति मासाँस्तान् ॥१॥ मासेभ्य. संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः स एनान्ब्रह्म गमयत्येष देवयानः ॥२॥ मुण्डकोपनिषद्यपि-तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्त सूर्यद्वारेण ते विरजा प्रयान्ति यत्रामृत स पुरुषोऽव्ययात्मा । अनेकत्र च भवान्तरगत्यादिनिर्देशः कृतः श्रुतिस्मृत्यो । न परं कुत्रापि ब्रह्म-प्रजापतिप्रभृतिकर्त्तव्यलेशोऽपि दर्शितो दीर्घदर्शिभिः । परं दृश्यते कर्मकृतमेवागमन तदिदमाह-विस्रंस्यमानशरीरस्थस्य देहिनः देहाद्विमुच्यमानस्य किमत्र परिशिष्यते एतद्वै तत् । ४॥

न प्राणेन नापानेन मृत्योर्जीवति कश्चन ।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥५॥

हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् ।
यथा च मरणं प्राप्य आत्मा भवति गौतम ! ॥६॥

योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिन ।
स्थाणुमन्येऽनुसंयति यथाकर्म यथाश्रुतम् ॥७॥

मुण्डकेपि-परीक्ष्य लोकान्कर्मचितान् । एष व. पुण्य. सुकृतो ब्रह्मलोक. ।

छान्दोग्ये च तद्यथेह कर्मजितो लोकः क्षीयते, एवमेवामुत्र पुण्य-जितो लोकः क्षीयते ।

बृहदारण्यकेऽपि-'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेने'ति। तथा तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति स विज्ञानो भवति विज्ञानमेवान्ववक्रामति तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च ।.२।। न केवलमेतावन्मात्र भवान्तरसङ्क्रमणविपर्यं कर्मबलं स्वीकृतमुपनिषत्कारैः किन्तु नवीनतरशरीरादानेपि यथाकर्मैवेति पूर्वं कठोपनिषदि प्रोक्तमपि स्पष्टं दर्शयति तद्यथा-'पेशस्कारी पेशसो मात्रामादाय मात्रामादायान्यन्नवतर कल्याणतरं रूपं तनु । एवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वान्यन्नवतर कल्याणतर रूप तनुते पित्र्यं वा गान्धर्वं वा दैव वा प्राजापत्य वा ब्राह्म्यं वान्येषां वा भूताना ।।४।। तथा पुण्यः पुण्येन कर्मणा । तथैव यत्कर्म कुरुते तदभिसम्पद्यते । तदेष श्लोको भवति-तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य । प्राप्यान्त कर्मणस्तस्य यत्किञ्चेह करोत्ययम्' ।। इत्यादिषु स्वयमेवादृष्टप्रभावो दृश्यते इतरनिरपेक्ष इति स्वीक्रियते पूर्वोक्तयुक्त्या। 'यस्यैव महिमा भुवि । तस्य भासा सर्वमिदं विभाति' इत्युपनिषदश्च ज्ञानद्वारा कर्त्तृत्वं चेद् वरम कापुर्भवन्तो यत्प्रपन्ना विचार्य स्वयमन्यमध्वान शुभतरपुण्य-जनपथावतारवत् । न चात्रास्ति चाकचिक्यम् । यतो न ह्यज्ञात सर्वज्ञेनास्ति किञ्चित् न चात्र व्यक्तिविषयो विवादः। अभ्युपगम्यते चास्माभिरपीद तदुक्तं —

सर्वभावेषु कर्त्तृत्वं, ज्ञातृत्वं यदि सम्मतम् । मतं न सन्ति सर्वज्ञाः । इति। पारमर्षेपि-'ज जह भगवया दिट्ठं तं तहेव परिणमइ'तिवचनात् । पापठति च लोकोऽपि यदु-एकेनावधृतं यथा प्रथमतो,

जातं च चेत् पश्चात्तत्तथा तर्हि 'भवदभिमतमेव जात'मिति भावत्कं सत्य, भवानेवात्र प्रभु. कर्त्तु मकर्त्तु मन्यथा कर्तुं चेतीहापि यदीश्वरेण दृष्टमेवोद्भवेज्जगति नान्यविचारितं स्यादेव तर्हि तद्विहितमेवैतदिति-व्यपदेश । भण्यते च सुश्रुतपरमार्थेनापि—यदीश्वरदृष्ट यत्तदेव भावि नान्यथेति । यथा वा तेन वस्तूनां मनोवाक्कायादीनां भूतादीनां कृत्वादीना च स्वभाव परिगीतो दृष्टो वा तथैव भवतीति कल्प्यतेऽसौ कर्त्तृतया सर्वेषां चेत्, न हानिरुपचरितस्य सर्वथा मृषात्वायोगात् । यथोच्यत एव ।

छान्दोग्ये—कोयमात्मेति वयमुपास्महे कतर. स आत्मा येन—पश्यति येन वा शृणोति येन वा गन्धानाजिघ्रति येन वा वाचं व्याकरोति येन वा स्वादु चास्वादु च विजानाति ॥१॥ यदेतत् हृदय मनश्चैतत् सञ्ज्ञानमाज्ञान विज्ञान प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूति स्मृति. सङ्कल्प' क्रतुरसु. कामो वश इति सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति ।।२।। एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्च महाभूतानि पृथ्वीवायुराकाशआपो ज्योतींषीत्येतानीमानि च क्षुद्रमिश्राणीव । बीजानीतराणि चेतराणि चाण्डजानि जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत्किञ्चेद् प्राणि जङ्गमं च पतत्रि च यच्च ब्रह्म ।।२।। स्थावरं सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोक प्रज्ञा प्रतिष्ठाप्रज्ञानं स एतेन प्रज्ञेनात्मनास्माल्लोकादुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामाना—प्त्वाऽमृत. समभवत् समभवत् इत्योम् । अत्र यथाहि जीवलक्षण-मात्मान गौणीकृत्य तज्ज्ञानमेव प्रधानीकृतं स्तेन सर्वकार्यसिद्धिरुदाहृता । तथेश्वरस्य परमप्रज्ञा नेत्रत्वाद्यदुच्यते सर्वविधातृत्वं नानुभवत्यनृतता-मिति । उच्यते चापेक्ष्यैवात्मनाऽपि सर्वविधानविज्ञत्वम् ।

यद्बृहदारण्यके-यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथ्वीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृत. ॥३॥ योऽप्सु तिष्ठन्नद्भ्योऽन्तरो यमापो न विदुर्यस्याप. शरीरं यो योऽन्तरो यमयत्येप त आत्मान्तर्याम्यमृत. ॥४॥ योऽग्नौ ॥५॥ योऽन्तरिक्षे ॥६॥ यो वायौ ॥७॥ यो दिवि ॥८॥ य आदित्ये ॥९॥ यो दिक्षु ॥१०॥ यश्चन्द्रतारके ॥११॥ य आकाशे ॥१२॥ यस्तमसि ॥१३॥ यस्तेजसि ॥१४॥ यः सर्वेषु भूतेषु ॥१५॥ य प्राणे ॥१६॥ यो वाचि ॥१७॥ यश्चक्षुषि ॥१८॥ य श्रोत्रे ॥१९॥ यो मनसि ॥२०॥ यस्त्वचि ॥२१॥ यो विज्ञाने ॥२२॥ यो रेतसि ॥२३॥ अदृष्टो द्रष्टाऽश्रुत. श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञातैष त आत्मान्तर्याम्यमृतोऽतोऽन्यदार्त्तं ततो होद्दालक आरुणिरुपररामेति ।

अत्र स्पष्टमेव विचित्रपर्यायानुयायिनोऽप्यात्मन उक्तापेक्षयाभिमत कर्तृत्व, व्यक्तीकृतं च नान्य इत्यादि । तद्वदत्रापीश्वरपरिदृष्टतयाऽभ्यनुज्ञायते चेत्, न कोऽपि विरोधलेश. । उपचरिते हि युज्यत एव सर्वं तस्येति ।

अथ चाश्रियते श्रियै षष्ठो विकल्पो विकल्पपृष्टैर्विकल्पपृष्ट. कालादिवत्तस्य साधारणकारणता मन्यमानैरेवम् । यतस्तेन दृष्ट चेद् भवति, न तावन्मात्रतस्तस्य कर्तृता युज्यते । उपचारतोऽप्येव हि गीयमाने कर्तृत्वे येन येन यद् यद् दृष्ट जायते तस्य तस्य स स कर्त्ता भवेत् । तथा च हिंसां विदधतो दर्शनेन तस्य पापीयसो जीवान् स्यादशुभकर्मबन्धोऽनेके चापरेऽरन कर्त्तार एवं सूर्य-योगि-कर्त्रितरजनाद्या । न च तत् सम्भवति, सम्भवति चेदुपचारेण सर्वं न तथापि वन्ध्यासूरत मिव कस्मैचिदपि साफल्यायेति विकल्प्य मन्यते तस्य कर्तृता, तदामद्वशात्वदतया विकल्प्यते च-यत् तेनोपदिष्ट तत्तदेव विधिस्तत्कर-

णाच्चामृतत्वाधिगमस्तदकरणाच्च ससारसंसृतिर्जायते जीवस्य । प्रोचिवासश्चर्षयोऽप्येतत् यदुत—

प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म ।
एतच्छ्रे यो नाभिनन्दन्ति मूढा जरामृत्युं ते पुनरापि यति ॥१॥

अविद्यायामन्तरे वर्त्तमानाः स्वयं धीरा. पण्डितं मन्यमानाः ।
जंघन्यमाना परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धा ॥२॥

अविद्यायां बहुधा वर्त्तमाना वयं कृतार्था इत्यभिमन्यन्ति बालाः ।
यत्कर्मिणो न प्रवेदयन्ति रागात्तेनातुरा क्षीणलोकाश्च्यवन्ते ॥३॥

इष्टापूर्त्तं मन्यमाना वरिष्टं नान्यच्छ्रेयो वेदयन्ते प्रमूढा ।
नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं चाविशन्ति ॥४॥

तपः श्रद्धेये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्त ।
सूर्यद्वारेण ते विरजा प्रयान्ति यत्रामृत स पुरुषो ह्यमृतात्मा ।११।

तथा तमात्मस्थं ये नु पश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् । यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति । इति श्रुतिसमुदायात् स्पष्ट एव निर्देशितोऽमृतमार्ग इतरस्य तद्ये यथा यान्ति ते तथा गतिभाजो भवन्तीति स्वीकर्तुमुचितं तस्यैतत्कर्तृत्वम् । लभ्यते हि यो गुणो यदनुशासनात्तस्य गीयमानं कर्त्तृत्वं तस्य न दोपपोषाय, कारणमात्रस्य कर्तृत्वात कथञ्चित्, कारणं चेष्टप्रवृत्तौ प्रादुर्भवत्येवावागिष्टसाधनतादि, न च तच्छास्त्रमृते, न च तदपि कर्त्तारमृते इति स्पष्ट शास्त्रकर्त्तुरमृतप्राप्तौ कारणत्वम । अत एव पठ्यते-मुक्तिदाता त्वमेवेति ।

न च वाच्यं यद्यप्येवं स्यान्मुक्तिकारणज्ञानप्रयोजकशास्त्रप्रणेतृत्वेन तस्य मुक्तिकर्त्तृत्वम्, तथापि संसृतिर्संसरणकारणता तु न कथञ्चनापि घटाकोटीमाटीकते । अन्यथा मुक्तिदातृतया आराध्यता-

वत्तस्य सम्भवन्ती तिरस्कार्यता न शक्यते निवारयितुं, दोषोत्पादकस्य स्पष्टमेव दृष्टविवेकविकचकल्याणैस्तिरस्करणीयत्वादिति। यतस्तदेव स तिरस्कारपात्र यदि शास्त्राणि प्राज्ञापयिष्यत्तथाबुद्ध्या, परं यद्यमृतायैव तेन दृब्धानि तानि कर्मवशपरनाथवद्भिर्जीवैश्च यथारुचि गृहीतानि प्रवृत्ताश्चामी तथा चेत् ससारसंसरणमवश्यं भावीति ज्ञानमेव तथात्वाय जात तस्य। न च तच्छास्त्रमृते इति तद्विधातुरदोषवत्त्वेऽपि तस्य तत्कारणता स्पष्टैव। अत एवोच्यते-'नाकारमन्तरा शास्त्र-शस्त्रयोर्विदुषां भिदा। तथा 'साक्षरा विपरीता' श्चेद्राक्षसा नेतरे पुन'रित्यादि। भवत्येव च ज्ञातेऽनिष्टप्रकाराणामेवानात्मवित्तया ज्ञातानामनृतवदनविपरीतप्ररूपण-लोभेन्द्रियपराधीनतादिना ससारसंसृतिवृद्धि. । न चाशास्त्रमशासित वोत्पन्नं तज्ज्ञान न च ज्ञानमूलमन्य इति स्पष्टैव तस्य तस्या ससृतेरपि कर्त्तृता। यद्वा-ये न जीयन्ते तदुक्तामृतमार्गे मारयित्वा मनोविकारांस्त एवावाप्नुवन्ति ससारमिति प्रामरतदा ज्ञानादर एव भवपर्यटननिबन्धनमिति तस्योपचर्यते सकारणं भवाटव्यटनकर्त्तृतापि विपर्ययारोपादिति चेत्। साध्वेतत् साधित भवद्भि यथा तथा कर्त्तृत्वम्। तदेव न कल्पते कल्पयितु जगदीश्वरस्य साक्षात् जगद्विधातृता विकल्पपटुकैरप्यविकल्पनीयै ।

यच्च शिपिविष्टसाधनसावधानतयोद्गीर्णमर्वागेव । तन्नैव युक्तिक्षमम्। तत्र यत्तावदुक्त-'जन्तुर्ही'त्यादि । तदसुन्दर, यतः प्रत्यक्षविरुद्धैषा कल्पना। न तावज्जीवा अज्ञानिनो, न वा स्वमीप्सितं न जानन्ति, न वा तत्र न यतन्ते, फलं चावाप्नुवन्त्येव यथाकर्म। यदा च प्रवृत्तिर्जीवगुण एव, तदा किमघटमानक विलोकितं विलोकनाचतुरैः। न च स्वेष्टसाधनताज्ञानमीश्वरेणाऽऽपाद्यते । तथा सति सर्वेषा तद्वत्ताप्रसङ्गात्। न हीश्वरो द्वेष्टि रज्यते वा कस्मैचित् केषुचिद्वा, येनैकस्य तत्सम्पादयेन्नान्यस्य। न च तद्भावे ईश्वरतापि

वास्तवी। स्याच्च सर्वेषां समानमेवेष्टसाधनता ज्ञानम्। न च तत्तथा अवलोक्यते इति विचित्रतान्यथानुपपत्त्या कल्पनीयमेवाभिनव किञ्चित्कारणं, यत् स्वय विचित्रं सद् विचित्रताधायि स्यात्।

यदप्यवाचि यत्-कथ 'चादृष्टस्वर्गश्वभ्रादिमार्ग'इत्यादि। तदप्यसमञ्जसम्, यतो वर्त्तमानभवेऽपि येन यद् यदा यत्र प्राप्तव्य, स तदा तत्र तत्प्राप्त्यै गच्छत्येव, ददाति चापरोऽपि तस्मै तत्। न चाऽत्र नेता दृश्यते, दृश्यते वा तत्कार्यं। कल्प्यते चेद् यथेच्छ परं, नहि कस्यचित् स्वतन्त्रकल्पनामनुरुध्यते पदार्थः। क्व च कल्प्यतेऽसाविति वाच्यम्, गमने याचने दाने आदाने वा ? यतः पादाभ्या गत, मुखेन याचित, हस्ताभ्या दत्तमादत्तं च प्रत्यक्षम्। प्रेरित ईश्वरेण चेत्। किं जगत्यामुपकारादिविलोपकाऽनिष्टतमयैतया कल्पनया। तथात्वे तस्यैवोपकारोऽयं न तु दातुः, तस्य श्रेष्ठिप्रेरितकिङ्करवत्तदादिष्टकार्यकरणात्। नहि तत्र श्रेष्ठिनं विहाय भवत्युत्तमर्ण. किङ्करः, स वा तस्याधमर्ण आदाता। बुद्धिर्दत्ता चेत् तेन कस्मैचिद विदितवृत्तान्तादेर्द ष्टा सा ?, येनैव कल्प्यमान कल्प्यं स्यात्। कथं च न दत्ता साऽखिलेभ्यो ? यथा सर्वे एव स्युर्निवृतात्मानः। अन्यच्च-एवं सति बुद्धिर्वधादेरपि स्यात् तद्दत्ता। तथा च कोऽन्यो जगति तादृशोऽपसदो, यो दद्यादन्येभ्योऽसद्बुद्धिम्। स्वत. सा चेत्, किं नेतरापि तथा। केन कृतमेतदितिचेद् गृहाण प्रतिप्राणि भिन्नं भागधेयं यदस्ति, तद्विलसितमेतत्।

ननु कथमेवं सत्यपि तस्योपकर्त्तृत्वादि ? परवतैव तेन करणादितिचेत्, तत्केन कृतमिति विभावय। यतस्तदपि तेनैव कृतमस्ति। अन्यच्च-अदृष्टं साधनं, कर्त्ता त्वात्मैव। नहीश्वरवत्तस्य विधातृत्वमेवाभिमन्यमानं स्यान्मन्तव्यम्। यदि च समग्रेऽपि अदृष्टश्रुतमार्गं यान्ति जीवाः स्वकर्मणा, तर्हि तदनुसारेण भवान्तरगतिरपि स्यात्, क एव विरोध. ?। अन्यच्च-यदि तेन नीता गत्यन्तरं जीवा यान्ति, तदा यदि जातु स न नयेत्तांस्तत्प्रति काऽवस्था

कर्मणो, जीवस्यैकस्य निष्फलत्वमन्यस्य मुक्ततामन्तरेण। तथा चायातं भवदीयमतेन यन्न तस्य सत्ता मुमुक्षूणा क्षेमकरी। ज्ञान न स्यात् चेत् न जीवस्वभावत्वात्तत्तु स्वय सिद्धमावृतं तु यत्कर्मणा तदैवेश्वरकृत्यमित्य-भ्युपगन्तव्यं भवद्भिस्तु। यद्वा-अस्तु ज्ञानदानमात्रकर्त्तृता यत उपकारो ह्ये प। उत्तमनीतिर्ह्ययं परेभ्योऽसमानरत्ननिभज्ञानवितरणम्। पर च कर्त्तृतायामज्ञानमपि तेनैव वितीर्णं स्यात्तदन्येन चेद्, विमुञ्चन्तु सर्वकर्तृताग्रहम्। एवं च स्वर्गं नेताऽसौ जीवान्न श्वभ्राणि। यथा चाहृष्टमार्गो यात्यसौ श्वभ्रे स्वकर्मणा कि न याता स्वर्गमपि, येन कल्प्यते तदाश्रित्य तत्कर्त्तृता, यया तस्य विषमताप्राप्ति., अल्पाना स्वर्गप्रापणात् बहूना च श्वभ्रपातनात्।

यच्चोदित 'कथमचेतनानि भूतानि'। तत् स्वजीवितमप्यनालोच्यै-वाभिहितम्। कथमन्यथा विविधाहारोपजातजीवितधारणापथ्यो-द्भूतरोगादि-विपोपभोगजातमरणादि दृष्ट्वा वा ब्रूयादेवं। जीवेन सम्बद्धाना संयुक्ताना वा तथाभावात् को वक्ति च वियुक्तान्येवा-चेतनानि तानि भूतानामुपकारायापकाराय वा भवन्ति भूतानीति येनैवमुपालम्भ., को वा निषिषेध जीवसत्तां, येनानधिष्ठितानीत्या-धुदीर्यते। यद्वा-अचेतनान्यपि भूतानि किं नावलोकितानि मनोहर-रूपादिद्वारा जीवानामुपकारकृन्ति प्रतिकूलरूपादिद्वारा चापकारपरा-यणानि?। येनैव नोद्यते। न च करवाललता व्यापारिता सती न छिनत्ति शिर आदि। साधिष्ठाना चेत् किं न लगति पथि पतित कण्टक स्वयमेव?। यद्वा-पतिता कृपाणलतिका न कृन्तत्युत्तमाङ्गमनाभोगेन शयानस्य?। केन च विहिता सा तीक्ष्णता कण्टकाना, महेश्वरेण चेद्, आः पापपुञ्जावस्करायमानता तस्य। स्वभावेन चेद्, आयान्त्वध्वनि वायुना चेद्भूत एवासौ पथि विप्रकीर्णा वा केन च स तेनैव विहित इतिचेत्, किमपराद्धम अङ्घ्रिभिर्यद-सौ वायुद्वारा तान् व्यकिरत्। निर्विवादं चेदं-यद्वनस्पत्यादिना वायू-

द्भवो व्यजनादिना निष्पाद्यते च स्वयमपि तर्हि क एतादृश आग्रहो, यद्युक्तियुक्ते विधाने स्वतन्त्रेऽपि तत्कर्त्तृतोल्लेखः, स्वभाव एवायं दृढतराग्रहस्य। कथं नु भवेद् ऋतुवैचित्र्येण वैचित्र्य वायोर्न चेत् स विधाता। सत्यं, परं यत्तस्य स्खलन तत् किमीश्वरस्यानुपयुक्तता, तत्स्थलवर्त्ति जीवानामुपरि द्वेषो वा, नाहुतयस्तत्रस्थैः सम्यग्दत्ता अभविष्यन्निति चेत् यत्र नैवाहुतिनामापि विदन्ति जना.। तत्र किमिति नियमेनापि। पूर्वजन्मविहिताऽदृष्टश्चेद्, वरमुक्तं, तदेवासाधारणं कारणम्। कथमेकाक्यदृष्टमचेतन विदध्यात् किञ्चिदपि स्वयमिति चेत्। कः किमाह? नहि लोकविवरवृत्त्यदृष्ट तद् विदधाति। किन्त्वात्मसंसक्तमेव। ननु न वायुना सम्सर्गस्तस्य कथ चर्त्ते तस्येति पूर्वमेव लोहोपल–लोहदृष्टान्तेन निरटङ्क्येतन मा विस्मार्षुं। तत्त्वतस्तु सूर्यगतिवैचित्र्येण तत्स्थलीयाऽऽत्मादृष्टानुसारेण तद्वैचित्र्यं नानुपपन्नम्। ऋतु–भेदेनाऽऽदित्यगतिवैचित्र्यमस्त्येव। तत्रापि कारणं त्वात्मादृष्टमेव। अत एव चोचिवांसो विद्वांसो जलनिधिवारिदमर्यादा–ज्वलनानिलगतिवैचित्र्यपृथ्वीस्थैर्यनिदानता तस्य दर्शयन्तः सूर्याचन्द्रमसोरपि तन्निदानमेव भ्रमणम्। यदाहु.—

आप्लावयति नाम्भोधि–राश्वासयति चाम्बुद.।<br>
यन्महीं स प्रभावोऽयं, ध्रुवं धर्मस्य केवल.॥१॥

न ज्वलत्यनलस्तिर्यग्यदूर्ध्वं वाति नानिल।<br>
अचिन्त्यमहिमा तत्र धर्म एव निबन्धनम्॥२॥

निरालम्बा निराधारा, विश्वाधारा वसुन्धरा।<br>
यच्चावतिष्ठते तत्र, धर्मादन्यन्न कारणम्॥३॥

सूर्याचन्द्रमसावेतौ, विश्वोपकृतिहेतवे।<br>
उदयेते जगत्यस्मिन्, नून धर्मस्य शासनात्॥४॥

इत्यादि । न च नाज्ञात भवति क्रियते वेति नियमोऽस्ति । दृश्यते ह्यज्ञानां बालमत्तसुप्तमूर्छितादीनां क्रिया । न च सा न फलति । तथा च यल्लपित न समर्थो ज्ञातुमिति । तद्वालजालमेव । अन्यच्च-सर्व एवात्मान सुखप्रिया दुःखद्विषश्चेति प्रयतन्त एव यथारुचि । पर मोहान्धत्वाददृष्टगुणदोषतया भवति विपरीतापि प्रवृत्तिः । नह्यातुर आमयवेगपीडितोऽयौषधमुपयुक्तमुपभुञ्जानोऽपि न विदधात्य-पथ्यम् । न च तत् केनचिदन्येन कारितम् । तद्वदत्रापि । अत एव चोक्तं महर्षिभिः—

'दुःखद्विट् सुखलिप्सुर्मोहान्धत्वाददृष्टगुणदोषः ।
यां यां करोति चेष्टां तया तया दुःखमादत्ते ।१। (प्रशम०) इत्यादि ।

'सकम्मुणा किच्चइ पावकारी' इत्यादि च । एतेन ये प्रलापं चक्रुरविदितवस्तुस्वभावाः यत्-यदि जीव एव स्वयं प्रवर्त्तते स्वभोग्य-कर्मकरणे किमित्यायतिकटुक कुर्याद् यायाद्वाऽशुभतरलेश्यापरिणाम-देहादिदुःखदावानलज्वालाभितप्त नरकमिति । ते निरस्ता । आतु-रवत्तस्योपपत्ते । वेत्ति च सर्वोऽपि भोक्तव्यमवश्यं स्वकृतं भागधेयं शुभमशुभं वा । किमिति प्रवर्त्तते प्रेत्याशुभतरविपाकवितरणपटुनि जीवः कर्मण्यशुभे, यैरङ्गीकृतमीश्वरो विधातेति तैरपि कर्मानुसारे-णैव तत्फलदातृता स्वीकृतैव । तर्हि तैरपि चिन्त्यमेवैतत्-यत् कथ-ममी प्रवर्त्तन्ते सुधोपममायतिहितदं आपातसुन्दरं च विहाय सुकृत-मार्गमन्यथाभूत एव । न चेश्वरो दाता फलं, न विहित चेज्जीवैरिति । गत्यन्तरगतिश्च जीवानामनिष्टापि साधयत्येवादृष्ट स्वस्य विहित-पूर्वम् । यथा विषमतमविषवेगातिशायि हालाहलमास्वाद्य कण्डूति कण्डूयनं वा विधायानीप्सुरपि तत्फलं किमवाप्नोति जीवितव्यमव्या-बाधतां वा ? न चेद् अत्राप्येतदेव विदांकुर्वन्तु विद्वद्वरा । यथाविहितं भोक्तव्यमेव स्वादृष्टफलम् । न तत्र स्वस्य समीहाऽसमीहा वोप-

योगिनी। अज्ञानेनाधिष्ठातृत्वमपि न सर्वथाऽनुपपन्नम्। यथाहि—भवद्भिरपि यदाऽऽह्रियते परिणमति चान्नादि जायते शरीरादितया तन्नाधिष्ठितं किं? अधिष्ठितं चेत्, किं तज्ज्ञातं कथं भवति कथं वा न? न चेत्तथैव विदन्तु कर्म। यथा वोपभुक्तमप्यौषधमचेतनं सदपि दूरीकरोत्येव गदानात्मनाप्यनिर्वार्यान् स्वयम्। तच्च कथं क तत्करोतीति ज्ञायते? तथापि किमुपभोक्ता नीरोगी न जायते? जायते चेद् अवबुध्यध्वमेवात्राधिष्ठानत्वम्। न काप्यनुपपत्ति परमार्थपथवेदिनाम्।

ईश्वरसिद्धिश्च नाकल्प्यते कैश्चिदपि। न च शक्या कर्त्तुं विहितापि च पूर्वं सा। परं न स एक एव, विहितानुष्ठानविधानावाप्तात्मनैर्मल्याना सर्वेषामेव तथात्वात्। जात्यपेक्षया वैकत्वे न कोऽपि विवादो, व्यक्त्यपेक्षमनेकत्वभावेऽपि जात्यपेक्षैकत्वस्याविरुद्धत्वादेतत्त्वन्यदेव।

यश्चोदितः श्लोक 'अज्ञो जन्तु'रित्यादि। स एवमपि न शक्यते योजयितुं? यज्जन्तुरनादिकालीनक्लिष्टतराष्टादष्टविलुप्तविवेकलोचनो जीव आत्मनः—स्वस्य सुखदुःखयोः-सुखदुःखनिबन्धनीभूत-शुभाशुभादृष्टहेत्वोर्विवेकाविवेकयोरज्ञो-मिथ्यात्व-ज्ञानावरणीयादिघनतरमलमलिमसत्वादबोध.। नहि भवति जीवाना स्वयं ज्ञानम्, उपदेशादेव तद्भावात्। अत एवोच्यते-केपाञ्चित्तद्भाव-स्त्वत्यन्ताल्प इति नैव विवदध्वे- सुचा जाणइ कल्लाणं'। गुरुशुश्रूषा-फलं श्रुतज्ञानं। परत्रागरणेण इत्यादि। सुखयतीति सुखं, दुःखयतीति च दुःखं, सातेतरवेदनीयादृष्टनिमित्ते एव गृह्येते अत्र। यतस्ते एव ह्यात्मन. सुखदुःखविधानविज्ञे। तर्हि कथं स प्राप्नुयात् सुखदुःखे? इति प्रोचु -'ईश्वरप्रेरितो गच्छेत् स्वर्गं वे'ति। तत्रेश्वरो-ज्ञानावरणादिघातिकर्मसमूलकाषंकषणाप्तज्ञानाद्यैश्वर्यो विशिष्टपुरुषः, तादृशस्येश्व-

रस्य प्रेरणाविषयमागत उपदेशानुसारेण प्रवर्त्तको विहायाश्रवाध्वनः सम्प्राप्तसंवरनिर्जरावर्त्मा जीवः। अत एवोपचारात् पठ्यते—'आरुग्गबोहिलाभं समाहिवरमुत्तम दिंतु'। 'ता देव दिज्ज बोहिं भवे भवे पासजिणचंदे' त्यादि। तथाप्रवृत्तश्च। वाशब्दस्य निःश्रेयसमनुजत्वादिसमुच्चयार्थकत्वात् स्वर्गमपवर्गं मनुजत्वं वा प्राप्नुयात्, तद्योग्यताप्राप्तेः। न चेत्तथाप्रवृत्तः, किन्त्विन्द्रियकषायप्रमादमत्तो भूत्वा यथोन्मत्तं चेच्चाराऽसौ श्वभ्रमेव वेति। एवकारोऽत्र व्यवस्थायाम्। सा च पूर्वं दर्शितैव 'न चेत्तथाप्रवृत्त'इत्यादिना। वाशब्दश्चात्रापि समुच्चये तिर्यग्गात-कुमानुषत्वादेः, तथा च पिहितविवेकलोचनो जीवः श्वभ्रं तिर्यक्त्व कुमानुषत्व वा यायादिति। न च तेन विरोध आपादयितुं शक्य। विहीयतां तदाऽऽग्रहः परमेश्वरपरमार्थस्वरूपाऽप्रज्ञताप्रोद्भूतपरमैश्वर्यपावनपरमेश्वरकलङ्ककरणनिपुणविषमतापादकविश्वविधातृताया। किञ्च—अकर्मणो विश्वेश्वरस्य शरीरविधानं, तदन्तरेण विश्वविधानं च कथ घटनीयम्, क्रियामात्रस्य मूर्त्तजन्यत्वेन व्याप्तेः। नैव चाङ्गीकृता युष्माभिरपि कालाकाशादीनाममूर्त्तानां क्रिया। यदि चेच्छामात्रजन्यत्वं स्वीक्रियते विश्वस्य 'सोऽकामयते'त्यादिवचनात्, तदप्यचारु। नहीच्छापि कृतकृत्यस्याऽकर्मणो वा सम्भवति। विरुद्धं चेदं, प्रत्यक्षेणैव क्रियाजन्यत्वात् कार्यस्य। ननु कथं तर्हि 'अणिमिसनयणा मणकज्जसाहणा पुप्फदाम अमिलाण'त्ति देववर्णनं सङ्गच्छते? इति चेत्। सत्य, 'मनसा कार्यसाधका' इत्यनेन न तेषां क्रियारहितत्वं, क्रियामन्तरेण कार्यसिद्धिसद्भावो वा प्रज्ञाप्यते। किन्तु यथा नराणां दृश्यमानेन भवभाविशरीरेण कार्यजननं, न तथा तेषाम्। किन्तूत्तरवैक्रियेणेति ज्ञाप्यते। न चानादाय वैक्रियादिपुद्गलान् विधातुं शक्नुवन्ति तेऽपि किञ्चित्कार्यम्। यद्वा यावदिच्छितकार्यसम्पूर्णता-शीघ्रताद्योतनाय। यतस्तेषां न किमपि न्यूनं कार्यम्, येन त इहागच्छेयुरितिदर्शनाय, नरलोकानागमनाधिकारपठितत्वादस्या गाथायाः। कथमन्यथाभिषेकार्थमुदकानयनादौ क्षीरा-

ञ्याादिगमनं तदादेशश्च सङ्गच्छते ? इति विचारणीयम् । सत्या चेच्छाया रागादिमत्त्वप्रसङ्ग इति पूर्वमुक्तमेवैतत, किमावर्त्तनेन । यदपि चोदाहरन्–'न केवलं पारलौकिके'त्यादि । तदपि शोभते गेहेनर्दिनामेव, न त्वनर्थाविधाना भवादृशाम् । यतो विचारणीयं तावदेतद्–यत न साहचर्यमात्र व्याप्तिः, किन्त्वन्यथानुपपन्नत्वं, पूर्वमुक्तमेव चैतत् हेतुस्वरूपाख्याने । प्रकृते च भवद्भिर्विशिष्टाकृतिमत्त्वात् कार्यत्व, तस्माच्च सकर्तृकत्व, ततश्चान्येपामयोग्यत्वादीश्वरसिद्धिरभिप्रेता कर्तुं विश्वविधानलम्पटतया । परमत्रापि विचारणीयं तावत–किं हि विशिष्टाकृतिमत्त्वं ? आकृतिमात्रस्य विशिष्टत्वात् । नहि परमाणुरपि त्रुट्यादिसमानाकृतिक, परमाणूनां चानादित्वादकार्यत्वमभिमतमेव भवद्भि'र्नित्याऽणुरूपे'त्यादिवचनात् । परमाणुभिन्नत्व तथात्व चेद्, अत्र तावत् प्रलयवादिनोऽपि केचिदाहुः पर त्रुटेर्विभागं तन् तथापि न सुन्दरमेतत्, अस्तु वा यत्किञ्चित् । विश्वविधातुरपि नभोमण्डलावगाहकत्वाद् विशिष्टाकृतिमत्त्वमात्मनोऽपि च 'एषम आत्मान्तर्हृदयेणीयान् व्रीहेर्वा यवाद्वे'त्यादिवाक्यात् तथात्वम । औपाधिकी ह्याकृतिरेषा चेत, नहि घटादीनामपि स्वाभाविकी, सा हि कार्यजन्यैव, विनाशिनी च तद्विनाशादनन्तरम् । मूर्त्तत्वेन विशेषणेऽपि परमाण्वादौ पूर्वोक्तरीत्याऽस्त्येव कार्यत्वाभावः ।

अस्तु वा विशिष्टाकृतिमत्तया कार्यता भवदभिमता, तथाप्युत्पत्तिमत्त्वमेव तथा कदाचित् सिद्ध्येत्, न तु सकर्तृकत्वम्, विद्युदिन्द्रधनुरादिषु बाधदर्शनात् । नहि तत्र विशिष्टाकृतिमत्ता न । न च तत्र विलोक्यते सकर्त्तृकत्वम् । न च प्रत्यक्षेण प्रमितेऽपि पदार्थेऽदृश्यकल्पना युक्ता । शरीरादप्युद्भवदपि नखकेशमलादि दृश्यते एव विशिष्टाकृतिमत, न च तत्केनापि विहितम् । (स्वस्येच्छा तच्चिकीर्षा तत्प्रवृत्त्यभावात) अनुभवसिद्धं चास्य स्वाभाविकोद्भवत्वम । यदि च तत्रापि तत्कर्त्तृताऽनुमीयते, तदा नेश्वरकर्तृताग्रहस्येयत्ता । न चान–

र्थकं पयोमुक्पय क्लिन्नभाजनस्य धान्याङ्कुरोत्पादनमपीश्वरस्य कर्त्तव्यं, फलानुमेया हि प्रारम्भा मतिमतां स्युरत्र च न ऋते विनागमुपलभ्यते किञ्चित्फलमन्यत् । एतेषां सर्वेषां पक्षकुक्षिनिक्षेपेऽपि न प्रत्यक्षबाधोद्धारोऽनैकान्तिकोद्धारेऽपि । न च तदपि न्याय्यम् । एवं सति सर्वत्र तथा वक्तुं शक्यत्वात् ।

ननु च क निर्णीतैषा व्याप्तिरिति वाच्यम् । यतो नहि सामान्यकार्यत्वेन सकर्त्तृकत्वस्य व्याप्तिग्रहो जातो भवतामिन्द्रधनुरादेरकर्त्तृकस्य जागरुकत्वात । यत्र च यद् दृश्यते तद्विशिष्टमेव कार्यत्वं विशिष्टं च कर्त्तृत्वम् । नहि पटकार्यस्य कुलालकर्त्तृकता, न वा घटकार्यस्य तन्तुवायकर्त्तृकता । किन्तु विशिष्टैव । व्याप्तिरपि विशिष्टैव तदा योग्या । सामान्यव्याप्त्यभावे कथं सकर्त्तृकतासिद्धिर्जगत । नहि च किञ्चिद्विलोकितमशरीरेण कर्त्तृकतावद् व्यापकं वा सकर्त्तृक नित्यज्ञानवद्वा तत्किं न चिन्त्यते ? । न चात्रानुकूलतर्को न । यो हि कार्यं विदध्यात् स प्रयत्नपूर्वक एव स्यात् । उपादानज्ञान-चिकीर्षावत्तस्यापि हेतुत्वावश्यकत्वात् । न चाशरीरः प्रयत्न । न च व्यापके क्रिया युज्यते । सर्वत्र समतया स्थितत्वं हि तत् । क्रियाया च सत्या चलनाद्यापत्तेरेकत्राभावस्तस्यान्यत्र च द्विगुणतापात. । ततश्च व्यापकत्वाभाव. । यश्च वेत्ति नूत्नं, ततो जायते तस्य तद्विषयिणी चिकीर्षा प्रयतते च । यस्तु नित्यज्ञानवत्तस्यावागेवानादितो ज्ञानादिमत्त्वात् कुतस्तरां सा नार्वागेवाभविष्यत । एवमकृतार्थत्वादयोऽप्यूह्याः ।

यच्चोच्यते-'नहि घटादिक'मित्यादि । तदप्यसमञ्जसमेव । यतो भवन्मते तावन्न कार्य एव यत्नः, भवददृष्टानुसारेण विधास्यत्येव विधाता भवताम् । न च कार्यो वदने कवलप्रक्षेपोऽपि, तमपि स एव विधास्यति । किञ्च-विधात्रा सर्वं क्रियते इति वादिनां भवतां यद् रोगाद्युत्पद्यते ? । तत्तेन कृतमन्येन वा ? । आद्ये, किं तस्य

प्रतीकारेण ? क्रियते चेदसौ निरुजत्वार्थ, भवति चापि तदा विधाता-ऽपकर्त्ता अगदङ्कारो भद्रकर्त्ता सुष्ठु विधाताराधना विहिता । ? अन्येन चेत्, कोऽसौ विहायाहष्टं ? तदेव चेत्, अस्तु समस्तमेव तद्विहितम्। न च वाच्य भवद्भिरपि न विधेय: प्रयत्न:, अदृष्टं करिष्यति स्वय-मेव सर्वमिति । यतोऽस्माक ह्यस्मत्कृतिविशिष्टमेवोदितावस्थं कर्म फलति । भवता यत्र न भवत. प्रयत्नलेश: तदपि विधीयते विधा-त्रेति । न तादृगत्र नियम इत्यापाद्यते पूर्वोक्तम् ।

अन्यच्च-अस्माभि: कार्यं त्रिविधमिष्यते-वैस्रसिक प्रायोगिकं मिश्रकं चेति । तत्राऽभ्रेन्द्रधनुरादिकमाद्यम् । तत्र नैवोद्यमोऽस्मत्प्रभृतीनाम् । द्वितीयं घटादिकमुद्योगोद्भवम् । तृतीयं केशरोमादि, जीवति स्वभावा-द्भावात् । तत्र द्वितीयस्मिन्नस्त्येवोद्यमोद्भवतेति नास्माकमनुचितं प्रयत्नकरणम। भवतां तु पूर्वोक्तया रीत्या अनुचित एव । नागत्त्य ईश्वरो यदेकं कुर्यान्नान्यत् । अस्तु वा सकर्त्तृकं समग्रभोक्तृजीवादृष्टा-नुसारेणैव सर्वं भवतीति कृत्वा, तथापि न विश्वेश्वरस्य विश्वविधातृ-त्वसिद्धि । बुद्धिपूर्वककर्त्तृतायामेवोपादानज्ञान-चिकीर्षा-प्रयत्नभाव-नियमात्। सुप्त-मत्तादिषु तथाऽभावात् तथाकल्पनाया आवश्यकत्वात्। भूभूधरसरित्सरित्पत्यादिकं चापि तत्तद्रूपेण परिणताना जीवानां सादृष्टानां प्रयत्नोद्भूत भवेत् तदा न कोऽपि विरोध: । अनूदितं चोपनिषत्कारैरपि-'पृथ्व्यां तिष्ठन्नि'त्यादिना। वैस्रसिकस्यापि जगज्जी-वादृष्टोदयाद्यनुसारेणैव भावात् । पर नैतावतोद्यमत्यागप्रसङ्ग । वैस्रसिकस्य तथात्वेपि प्रायोगिकस्य तथात्वात् । न चैतावता जग-तोऽनादिताव्याघात:,अपरापरजीवगृहीततया अनादितोपपत्ते: । एवम्भूत एव हि बीजाङ्कुरन्यायो यद् दृश्यमानेष्वल्पकालीनत्वेऽपरापरव्य-क्तिसमूहेनापर्यवसानता। एवमत्रापि । नहि कदापि भूतपूर्वमेतत् यदुत-न कोपि विचित्रादृष्टवान् पृथिवीत्वादिनिबन्धनादृष्टवान् वा । तथाच सकर्त्तृकतायामपि न कोपि विरोध. । अत एवोच्यते—

परमैश्वर्ययुक्तत्वान्मत आत्मैव वेश्वरः ।
स च कर्त्तेति निर्दोष, कर्त्तृवादो व्यवस्थित ॥१॥

तथा च यथाकथञ्चित् सकर्त्तृकत्वसिद्धावपि न वो मनोरथपूर्त्ति ।

एतेन य आहुः—जात विश्वं स्वभावेन, चेत कुम्भो न कथं भवेत् ।
कुम्भार्थं क्रियते यत्न, कथ विश्वं स्वभावज ॥१॥ मिति ते निरस्ताः ।

अत्रैवं वाच्यं स्यादन्यै.—

कृत विश्व महेशेन, चेत्त कुम्भादि न किं कृतम् ? ।
जन्त्वदृष्टभव कुम्भ, चेद्विश्व न कथ तथा ? ॥१॥

कुलालः कुलवृद्ध्यर्थं, वितनोति घटादिकम् ।
विश्वेशस्य विधातृत्वे, पोष्यं तस्य कियद्भवेत् ॥२॥

स्तोकभाजनकृत्यर्थं, कुलाल सप्तगर्दभ ।
महेशस्य गृहं स्यात्त, गर्दभैः सर्वदा भवेत् ।३॥

सर्वमेतद्बालचापलमेवान्योन्यम् । अन्यथा नैतदविदितं विदुषां यदुत-यत्नसाध्ये यत्नो, नायत्नसाध्ये । न च यत्नसाध्यमन्यथा भवति । परमपि चान्यथेति यथायोग सर्वम् । अनेनैतदपि प्रत्युक्त, यत् कैश्चिदुच्यते–यदुत श्यामघटस्य पाकेन नाशे कथ न चेन्महेश्वरो विधाता, न स्यात् रक्तघटोत्पत्ति, छिद्रे च घटे परिमाणनाशेन वस्तुनाशावश्यभावात् नूत्नछिद्रघटोत्पत्तिर्भवेदिति । तदपि स्वकपोलकल्पितसिद्धये एव यतमानैर्यतः प्रोक्तम् । अन्यथा स्यादेवावयविनि पाक पर्यायपरावृत्तिरेव च छिद्रे । कथमन्यथोभयत्रापि प्रत्यभिज्ञा विशिष्टचिह्नानि च तथावस्थितान्येव विलोक्येरन् । भ्रान्तौ कथ्यमानाया किं नियमन स्याद् भवतामभ्रान्ततायां तत्रास्ति सवाद, न भवदुक्तसिद्धौ अन्तरा कल्पनाम् ।

यद्वा--भवेत कदाचित्तथेति कक्षीक्रियते, तथापि कुर्याद्-दृष्टमेव तत्। यतो हि सर्वत्र सर्वकार्याणामात्मनामदृष्टै र्विधीयते इत्यङ्गीकारेणैव च भवद्भिरात्मना सर्वव्यापित्व स्वीक्रियते, तत्किमत्र विस्मृतम्। स्मृतं चेद्, दीयता कर्त्तृतायै महेशस्य जलाञ्जलि:, सर्व-व्यापितायै वा आत्मन.। अत एव च नेदमपि नोद्यम्-यद्वायोजित द्व्यणुकादि धृता वा सूर्यादय.। यथादृष्टमेव तद्भावात। नहि सर्वत्र समाणुयोजना।

यद्वा-सादृष्टजीवविहितत्वेन तत् स्यात् कर्त्तृकतान्वितम्। न च न वियुज्यते सयोगेन जीवेन स्कन्धादि संयुज्यते वा, वृक्षादि देहादिपरिणते प्रत्यक्षं दर्शनात्। विचारयन्तां भवन्त एव बालतनुपरिमाण स्त्रेपा वार्त्तमानिक च, समेष्यति चैतावतैव मनसि सादृष्टजीवाना पुद्गलोपचयकर्त्तृता, दृष्टपूर्वयौवनस्य वृद्धत्वे क्षीणतापि गोचरीक्रियमाणाऽध्यक्षं तदपचयकर्त्तृतापि. प्रत्याययिष्यति यथायथ शरीरवृद्धेर्नियमात् पृथिव्यादीना तथाविध आयोग: स्यात् को विस्मय: ?। कथं च प्रतिक्षण वियुज्यमान-सयुज्यमानप्रमाणातीतद्व्यणुकत्र्यणुकानन्तानन्तस्कन्धविषया अनन्तानन्ताकृतिरेककालीनै कस्मिन्नीश्वरे सङ्गता स्यात्। नह्येककृतिसाध्यौ सयोगवियोगौ इच्छामात्रसाध्यत्वे च कृति-जन्यत्वं कार्यमात्रस्य भवतां यदभिप्रेतं तन्मिथ्या स्यात्। अदृष्टजन्यत्वे च सानुकूलता, प्रतिजीवं भिन्नत्वात्तस्य। स्वीक्रियते च भवद्भिरप्युपभोगसाधनानामदृष्टविहितते नि किमन्तर्गडुकल्पया तदिच्छया, कृत्या वा तदीययेति। [नरकादौ वा सूर्यादय.] यथा च पतत्रिण सादृष्टजीवत्वाद्वधृतास्तिष्ठन्ति तथा सूर्यादयोऽपि स्युश्चेद्धृतास्तदा को विरोध: ? सूर्यलोकानामावृत्तिश्रुतेश्च स्पष्टैव तेषां सकर्मता। तथा च सूर्यस्य विधोर्नक्षत्रादीनां च स्वप्रयत्नावधृतत्वमेव युक्तम्।

यद्वा—यथा वायुना अवधृता यथा अभ्रादय आकाशे—

ऽवतिष्ठमानाश्च प्रत्यक्षं दरीदृश्यन्ते, का हानिस्तेषामनवधृतत्वे सूर्यादीनां ? येनाऽदृष्टकल्पना क्रियते, अदृष्टादे सिद्धस्य कारणत विहाय। यद्वा किं न दृष्टा उदिताहस्करकिरणागमनजालके स्वतन्त्रमवध्रियमाणास्त्रसरेणवस्त्रुट्याद्योऽप्यक्षम् ?, येनैव कल्प्यते ।

यच्चोदीरितमुदीरणाप्रधाने - यच्चद्वाक्य मित्यादि । तदपि विश्वविधातृत्वसिद्धये नालम्। तावता तु सङ्केतकर्तृत्वसिद्धि, न च सोऽसम्भव्यस्मदादीनाम । यतो दृश्यत एव नृपादिभिः प्रचारिता देशविशेषेण विशिष्टा वा तन्निवासिजनविहिता विचित्रा भाषा वाक्यपद्धतिश्च । अन्यच्च-न नियता सर्वकाले भाषापि, वेदोपनिषत्काव्यादीनां संस्कृतभाषासंस्कृतानामपि भाषावैचित्र्यम् । संस्कृतभाषा तेन प्रवर्त्तिता, को नियमो ? यन्नान्येन सा प्रवर्त्तिता । तथात्वे वा कथ वैयाकरणमतानां भिन्नता ? तन्न युक्तमिदम ।

विचारणीयं चान्यदपि विद्वद्भिः-यन् म्लेच्छानां या भाषा सङ्केतबन्धनबद्धा सा केन विहिता ? विधात्रैव सापीति चेत्, कथं हि 'न म्लेच्छित वै' इत्यादिर्न वदेद्यावनी भाषामित्यादिर्निषेधः कदाग्रहाज्ञानादिनिर्मितोपि युक्तियुक्तः स्यात्, तस्या अपि विश्वेश्वरविहितत्वाविशेषात् । कथ च स्वय विधाय निषेधयेत् साक्षरः ? । अन्यच्च-नास्ति भाषाया नियमिता, प्रतिद्वादशक्रोश तद्विपरिवृत्तेः । एतावता सिद्धमिदम्-यन्नैकः कश्चित्सङ्केतविधाता नियमितः सिद्धयति, येन विश्वविधातापि सिद्धयति । का वार्त्ता तर्हि विश्वविधातृतायाः ? । अस्तु वा प्रवर्त्तकः सङ्केतस्य, व्यवहारप्रवर्त्तकस्य कुलकरादेस्तथाभावेन विरोधानवकाशात् । दृश्यते देशव्यवस्थापकप्रवर्त्तिता विचित्रा भाषा । उच्यते च विद्वद्भिरत एव 'य स्रष्टा सर्वनीतीना'मित्यादि । स्वनिवासदेशापेक्षं चैतदिति न कोपि पूर्वोक्तो विरोधोऽत्र ।

एतेन शब्दार्थावधारणसङ्ख्याव्याहारादि सर्वं प्रयुक्तं वेदितव्यम्। आदिशब्दशब्दितं नाशाद्यपि दिशाऽनयैव भाव्यम्। यतो भवत्येव कालपरावर्त्तादिना घटपटादेर्नाशः, उपलभ्यते च तथैव। तथा च किमदृष्टकल्पनया। आगमाश्चोदीरितास्तेऽपि पूर्वापराविरोधेन व्याख्यायन्ते चेत्, न ते कर्त्तृत्वस्य साक्षात् साधका किन्त्वौपचारिककर्त्तृत्वसाधकाः। तच्च तद्वृत्तिपदार्थप्रतिपादकशास्त्रप्रणयनादिना स्यादेव। पर तदपि नाऽनादिसिद्धस्याशरीरस्य। तदुक्तमभियुक्तैः—

'धर्माधर्मौ विना नाङ्गं, विनाङ्गेन मुखं कुतः'।
मुखाद्विना न वक्तृत्वं, तच्छास्तारः परे कथ ॥१॥

मिति सशरीरस्येश्वरत्वेऽङ्गीक्रियमाणे युज्यत एव सर्वम्। यतोऽज्ञानपङ्कादुद्धाराय निःशेषभूमिस्पृगसाधारणपुण्यप्राग्भारलब्धावनारा युगादाववतरन्ति युगोत्तमाः। ते च यात्राभूम्योर्ज्ञानदातृत्वेन पर्यायेण विश्वस्य गृहारामादिविधेस्तत्प्रवर्त्तितत्वात् कर्त्तृता। पूर्वं हि तत्कालायुगलिनो न गृहारामादिव्यवस्थावन्त आसीरन्। साम-दाम दण्ड-भेदरूपाणां नीतीना नैगमादिनयाना वा प्रकाशनात् स्यादेव च भुवनगोप्तृत्वम्। नहि नीतिज्ञानमन्तरेण कोऽपि तदनुसारेण प्रवर्त्तते, लभते चोत्तमता, रक्षति चान्यांस्तद्विधाने तु स्यादेव भुवनगोप्तृता। आसीच्च युगादीश्वरावतारादर्वाग् जगत्सुखबाहुल्यमपि धर्माधर्मपरिज्ञानाभावादसदिवात्मोद्योतकराध्वनो विनष्टत्वात्। आविष्कृतं च शिववर्त्म तेनैव पुरुषोत्तमेन। एवमन्यान्यश्रुतयोऽप्यवगन्तव्या अविरोधेन। को वाऽऽग्रहस्तासां परस्परविरुद्धतमाना यथार्थत्वे ? यतस्तत्रैव तावद्धि प्रतिषिद्धमन्योन्यम्। एके तावत्-'ब्रह्मै वेदमग्र' इत्याहुः। तदाऽन्ये-'असदेवेदमग्र' इत्याहुरन्ये च-'मृत्युनैवेदमावृतमासीत्', तथैव एके 'अन्नं वै प्रजापति' रित्याहुः, तदाऽपरे एके केचित्तन्नेत्याहुः। एवमेव केचिद्धृदये आत्मानमाहुरन्येऽङ्गुष्ठपरिमाणमन्ये यवादिमानमन्ये वालाग्रशतभागमानमविशेषेणोदाजह्रुः। कियन्तो दधिमाष-

भोजने कृष्णा विविच्यन्ते । ज्ञायन्ते चोपनिषदो भिन्नभिन्नै ऋषिभि स्वतन्त्रं प्ररूपितत्वात् स्पष्टं विरुद्धा । न चासम्भवितमिदमल्पज्ञानाम्, यथावज्ज्ञानाभावाच्छद्मस्थानाम् । छद्मस्थत्वं च तेषां वैकल्पिकव्याख्यानेनैव स्पष्टं निर्णीयत इति नात्र चर्चा चर्च्याऽस्ति ।

तदेवमारम्भाभावाद्विश्वस्य यथा कल्पित मनुष्योत्पादाभावाच्चानादित्वं संसारस्य सिद्धम् । सिद्धे च तस्मिन् प्रमाणादिव्यवस्थाया अनादिनिधनात्मकत्वमपि सिद्धमेव । यद्यपि च पूर्वं युगादीशात्र व्यवहारो यथावस्थित इति व्यवस्थापितं, पर तद् राज्यकरण-प्रजापालनाद्यपेक्षया । न तु प्रमाणाद्यपेक्षया । यतो न प्राक् प्रत्यक्षादिप्रमाणं तद्व्यवहारश्च नाभूत् । राज्यकरणादि चापि भरताद्यपेक्षयैव युगादीशादिविहित, न तु महाविदेहादौ, तस्य तत्र शाश्वतत्वात् ।

अनादिनिधनात्मिकाऽपीय प्रमाणादिव्यवस्था पुन कीदृशी ? इत्याहु.-यद्वा प्रमाणादिव्यवस्थाया क्षुण्णत्वं दर्शयन्तः स्वोद्धत्य परिहरन्त आहु.—'सर्वसंव्यवहर्तॄणा प्रसिद्धापि' इति । तत्र सर्वे-स्वपरपक्षादिभिन्नाः समस्तास्ते च ते संव्यवहर्त्तारः—सम्यगबाध प्रमाणप्रमिततया व्यवहरन्ति-अर्पणाऽऽदानादिव्यवहारं विदधतीति संव्यवहर्त्तारस्तेषा । नियमो ह्येष यदुत विवेकिना समाचारश्चिन्त्यते शास्त्रेषु, नेतरेषाम तत् सुष्ठूक्तं-'संव्यवहर्त्तॄणा'मिति 'सर्वे'ति च मध्यस्थानां अनेकानामपि न प्रमाणादिव्यवस्थायामस्ति भेद इति ज्ञापनाय । 'आद्यत्रयमज्ञानमपि भवति मिथ्यात्वसंयुक्त'मिति तु सदसदाद्यपेक्षया तद्गत । यतो न स्याद् द्रव्यपर्यायादिका ज्ञप्तिरनुभवगम्या बुद्धिमताम् । पर सामान्यापेक्षया वार्त्तमानिकपर्यायेषु व्यवहारेण न विरुद्धत्वमित्येव निरदेशि । तेषां 'प्रसिद्धापि' प्रकर्षेणाऽबाधतया व्यवहारसाधनतया तज्ज्ञापितवस्तुप्रवृत्त्यादिना वा सिद्धा-अनुभवमानीता, प्रसिद्धा वा प्रकटा, न तु प्रच्छन्ना, तादृश्यपि । अनेन स्तो·

द्धत्यं परिहरन्ति। यतो नहि प्रसिद्धार्थानुशासकोऽवाप्नोति अनुशास्तृशिरशेखरताम्। तत्त्वतस्तु प्रस्तुतप्रकरणप्रस्तुता प्रमाणादिव्यवस्था न कथञ्चनापि कैश्चिदपि विरोधमनुभवन्तीतिदर्शनार्थमुपन्यास। नहि प्रसिद्धमर्थं शासच्छास्त्रमर्थवद् भवति। तत् प्रसिद्धत्वेऽस्य च स्यादेवानर्थक्यमित्येवं कार्या व्याख्या। यद्वा-संव्यवहारकर्त्तारोऽत्र विद्वांस. सन्ति। न च तेऽत्राधिकृताः 'तद्व्यामोहनिवृत्तिः स्याद् व्यामूढमनसामिहे'ति प्रतिज्ञानात्। तथाच विद्वत्परिषदि प्रसिद्धापि व्यवस्थेय नेतरेषां तथेति। तेभ्यस्तत्कीर्त्तनमप्रसिद्धत्वात् सफलमेव। यद्वा-प्रकीर्णकरूपेण यद्यपीयं प्रसिद्धा तथापि नैवं यथार्थमुपनिबद्धाऽस्ति। अनुपनिबद्धायां चैव न स्याद् व्यामोहनिवृत्तिरिति युक्तं प्रसिद्धाया अपि निबन्धनमेतस्य। इति ज्ञाप्यतेऽपिना। किमित्याहुः-'प्रकीर्त्तिते'ति। प्रकर्षेण-अव्याप्त्यतिव्याप्त्यसम्भवव्यवच्छेदेन कीर्त्तिता-श्लोकबद्धोपनिबन्धेन संशब्दिता। यथा वाचकपाठकानां सुखावधारणपाठप्रमुखं सिद्ध्येत् तथोपनिबद्धेत्यर्थः। अत्र कीर्त्तितेतिशब्दोऽन्त्यमङ्गलाय। तच्च शिष्यप्रशिष्यादिवंशस्याविच्छित्त्या शास्त्रप्रवर्त्तकम्। 'अन्ते अव्वुच्छित्तिकरं 'सिस्सपसिस्साइवंसस्से'ति वचनात्। कीर्त्तितशब्दश्च प्रशस्तभावोत्पादकत्वान्मङ्गलमेव, प्रशस्तभावस्यैव मङ्गलपदार्थत्वात्, अन्यथा मङ्गलस्यापि मङ्गलकार्याकरणात्। प्रशस्तमपि वस्तु प्रशस्तभावोत्पादकतयैव मङ्गलम्। अत एव च शिष्यबुद्धिमङ्गलपरिग्रहार्यैव मङ्गलमित्यभियुक्तपादा आख्यान्ति। भद्रादिगणान्तगर्तत्वादपि मङ्गलमेष शब्द.। यतो-

'देवता वाचका शब्दा, ये च भद्रादिवाचकाः। ते सर्वे नैव निन्द्याः, स्युर्लिपितो गणतोऽपि वे'तिवचनात्। ग्रन्थसम्पूर्णतां कुर्वन्त आहुः-

इति'न्यायावतारसूत्रं' तत्र इति सम्पूर्णार्थमव्ययम्। न्यायस्य प्रमाण-प्रमेयादिपदार्थबोधस्यावतारो-निरूपणं यस्मिन् स न्याया-

वतारः। यद्वा-न्याये-यथार्थार्थपरिच्छेदके स्याद्वादश्रुते यथास्थितमार्गे वा अवतारो यस्मादिति न्यायावतार, स चासौ सूत्र च-अल्पाक्षरैरपरिमितार्थं सूत्रयतीति व्युत्पत्तेर्बह्वर्थसंग्रहमयमल्पाक्षरोपनिबद्धं न्यायावतारसूत्रं तन्नामकप्रकरणमितियावत्। आदावभिधानस्यानिर्देशस्तु सञ्ज्ञानिर्देशस्यानियमज्ञापनार्थम्। अर्थान्तरेण तु प्रमाणमित्यनेन तु सूचितमेव तत्।

अथ प्रान्ते कर्त्तारः स्वनामोल्लेखं स्वकृति दर्शयन्त आहु -'कृतिरियं श्रीसितपट्टसिद्धसेनदिवाकरस्येति'। कृतिः-प्रकरणोपनिबन्धनप्रयत्न, इयं-प्रत्यक्षमुपलभ्यमाना, ज्ञानस्याप्रत्यक्षत्वेऽपि लिप्यादेः शब्दादेश्च प्रत्यक्षत्वाद्, हृद्विवर्त्तिताया चैव निर्देशः। कस्येत्याह-'श्री'त्यादि। सितं-श्वेतं वस्त्रं यस्यासौ। अनेन रक्त(क्त)पट्ट-नग्नाटताव्यवच्छेदमाहुः। यद्यपि च नग्नाटा जैनाभासतया स्वापयश.पङ्क प्रचिक्षालयिषव एनान् स्वीचक्रुर्नाममात्रेणैतत्प्रणीतकल्याणमन्दिरस्तोत्रपाठाङ्गीकारेण परमेतत् तत्त्वार्थाङ्गीकरणानुकारम्। यतस्तत्तैरभ्युपगम्यते परं एकादश जिने' इति सूत्रं विदधात्येव शल्यमन्तःकरणे तेषाम। यतस्तेषां हि क्षीणघातिकर्मणामवाप्तासाधारणानन्तज्ञानाना न क्षुधाऽऽहारश्च तैरभ्युपगतः। तदभावे कथं क्षुत्पिपासापरिषहसहनं तेषा सङ्गच्छते? कथं च विनिर्दिशेयुर्वाचकमिश्रा अपि चेन्न तथाभावो भवेत्। एकेनाधिका न दशेति तु सङ्ग्रहकारशैली विरुद्धमेव द्राविडीयप्राणायामानुकारवच्च। वैयाकरणानां चार्धमात्रालाघवमपि पुत्रजन्मोत्सवायेति कथमेवं कुर्युः। तत्र वाचकमिश्रा नग्नाटा, कथं च ते व्याख्यास्यन 'मूर्छा परिग्रह' इति किन्तु निह्नवशिरःशेखरकाणामिव सङ्गमात्रस्यैव परिग्रहत्वं व्याख्यायेरन्। यदि ते स्युस्तथाङ्गीकारश्च तेषा, तेषां महते आनन्दायैव यदि स्यात् सम्यक्त्वयासौ। एवमत्रापि।

'स्थाने गभीरहृदयोदधिसम्भवाया, पीयूषतां तव गिर. समुदीरयन्ति।
पीत्वा यतः परमसम्मदसङ्गभाजो, भव्या व्रजन्ति तरसाप्यजरामरत्वम्॥'

इत्यत्र शमिताशेषाशुभादृष्टदलिकाना शासनप्रवर्त्तनफलकतीर्थकरनामकर्मोदयवतां स्पष्ट देशनाविधानविलसित वाग्भिः निर्दिदिशुः। भव्याश्च तत्पानकारिण इति। न च तथा तेषां मते, अव्यक्तध्वनिर्जिनो, गणभृत एव च तदर्थविद' इति हि तन्मतम्। न च युक्तं तत्, स्पष्टवाचकत्वस्य तेषां सम्भवात्। प्रत्युतानेकभव्यानां बोधोत्पादः स्यादेव तथा योजनगामिन्या वाचा व्याख्याने। अलमेतेन विवादेनाधुना। परं नैते तन्मतानुगा इति स्पष्टितमेतेन। सिद्धसेनोऽवाप्ताचार्यपदमहोत्सवात्रसरैतदभिधानः। प्राक् हि कुमुदचन्द्र इत्यभवच्छ्रीमता तेषामभिधानम। यत आहु. कल्याणमन्दिरावसाने 'जननयनकुमुदचन्द्रा' इत्यादि। लब्धाचार्यपदाश्च त एव सिद्धसेना इति। यदवोचुः महादेवस्तुतिद्वात्रिंशिकाया—

'महार्चिर्धनेशो महाज्ञा महेन्द्रो महाशान्तिभर्त्ता महासिद्धसेन' इत्यादि। द्वात्रिंशद्द्वात्रिंशिकाया पञ्चम्या स्तुतिद्वात्रिंशिकायाम्—

'इति निरुपमयोगसिद्धसेनः प्रबलतमोरिपुनिर्जयेषु वीरः' इत्यादि च। तत्र सितपट्टश्चासौ सिद्धसेनश्च सितपट्टसिद्धसेनः, श्रिया—ज्ञानादिलक्ष्म्या युक्तो।

यद्वा-विद्याया अनवद्यकल्पलताया विद्वत्त्वकवित्वरूपे उभे फले तैः प्राप्ते। कवित्वे तावदाहुरेव चौलुक्यचूडाञ्चितचरणा श्री हेमचन्द्रसूरिपादा स्वोपज्ञे श्रीसिद्धहेमचन्द्राभिधाने शब्दानुशासने'अनुसिद्धसेनं कवयोऽन्ये तेभ्यो हीना कवय इति'उत्कृष्टेऽनूपेने'ति सूत्रे। विद्वत्त्वं च सुगृहीतनामधेयाना भगवता सम्मत्याद्यनेकातिशयगहनतमार्थग्रथितप्रकरणावलोकनेन स्पष्टमेव प्रतीयते। आस्तामेतत्, भवविरहसूरयो हरिभद्राचार्या अपि पूर्वान्तर्गतापूर्वग्रन्थनारतारकदर्शनपटिष्ठदर्शना अप्याचख्युर्यदाहुस्ते-'तथा चाह महामति'रिति 'प्रसिद्धानि प्रमाणानी'त्यादिश्लोकातिदेशसमये। ततश्च श्रिया-विद्वत्त्वकवित्व-

रूपया विद्याफलरूपया शोभया, युक्तः-सितपट्टसिद्धसेनो मध्यमपद-लोपाच्छ्रीसितपट्टसिद्धसेनः, स चासौ दिवाकरो नृपबोधनाद्यातैत-द्विरुद् । अत एव च नृपगुणवर्णनामयी द्वात्रिंशिका विदध एकादशी तैर्वादीत्यपि चाभिधीयते वादकलानिपुणत्वात् तेषाम् । तस्य श्रीसितपट्टसिद्धसेनदिवाकरस्य कृतिरियमिति सम्बन्धः ।

न च स्वनामोच्चारणस्य गर्हितत्वात कथमेतदिति वाच्यम् । मातापितृकृताभिधानस्याभिधाननिषेधात् । एतच्च गुरुपादारविन्दसेवा-प्राप्तमिति युक्ततोच्चारणस्य । यद्वा 'आत्मनाम गुरोर्नामे'ति निषेधव्य-वहारो निर्विशेषणतदभिधानप्रयोगमाश्रित्य । अन्यथा 'देवतानां गुरूणां चे'त्यत्रोपपदशून्यस्य न स्वाभिधानस्य निषेधप्रसङ्ग एव, आदित एव तन्निषेधात । अनेन'आत्मानमे'त्यादि स्वकीर्त्यनुवृत्तये उच्चारनिषेधा-ख्यानपरं न तु लेखनमित्यादि, य आहुः । तन्न, देवतानामित्यत्रोच्चार-स्यैव विधानविशेषोपलम्भात ।

गुरूणां सार्वाणां चरणकमलोपासनभवात्,
प्रसादात्तीर्णोऽयं विषमतरपथार्थगहना ।
सरितस्रोतःपूर्णा जिनवचनबेडां श्रितवता,
सदाऽतो भूयास सकलसुखकृतशास्तृशरण ॥१॥

न्यायावतारसूत्रस्य, दीपिका दीपिता मया ।
विद्वत्सेव्यावच स्नेह-वत्तिभावात्तमोनुदे ॥२॥

पायं पायं वचनममृतं तावकं तृप्तचित्ता,
दर्शं दर्शं त्रिभुवनगतं वर्त्तनं तत्प्रभावात् ।
पोषं पोषं निरुपधिसुखं मेनिरे यां न शिष्टां,

(सेवं सेवं हृदयकजगं सर्वदा त्वां सुखी स्याम् ।)
नाम नामं चरणकमलं प्रार्थयाम्येतदेव ॥३॥

पदानां त्रयं ते समासाद्य बुद्धा,
वितेनुर्गणेशाः समां द्वादशाङ्गीम् ।
स नार्थोऽस्ति विश्वे न यस्तत्र बद्धः,
चरित्रं न चित्रं कथं ते जिनेश ! ॥४॥

जयन्ति ते गणाधिपास्त्रिपादुगत्राश्रिताः पुन-
रदीदृशन्न दोषविश्वमाप्तशास्त्रगुम्फनैः ।
न चित्रकृत्तदारतस्त्रिविक्रमस्य विक्रमः,
पदत्रयं तदीयमानशे भुवं यतोऽल्पिकाम् ॥५॥

जयन्ति स्वप्रभावालि-न्यक्कृताखिलतीर्थिकाः ।
विक्रमादित्यभूपाब्ज-प्रोल्लासैकदिवाकरा ॥६॥

सत्तर्ककर्कशगिरा रचितासमार्थ—
प्रद्योतिसम्मतिमुखाऽप्रतिमप्रबन्धाः ।
अज्ञानसन्तमसभेदनभानुकल्पा,
आप्ता जयन्ति गुरवो ननु सिद्धसूर्याः
( शुभ्रा दिवाकरपदेन जयन्ति सिद्धाः ) ॥७।

श्रिता वाणी लोप सुरगुरुरपि स्वर्गमगमद्,
हरित्सङ्कीर्णाभूत् भुवनवलये वाग्भिधया (वादियशसा) ।
न चन्द्रो नाऽऽदित्योऽन्धतमसमपाकर्त्तुमिह य-
दलं तत्ते (चैभि) र्नुन्नं विकचशमशास्त्रप्रणयनात् ॥८॥

न शक्तः सूक्तीनामसममहिमानं प्रथयितु—
मलं देवेशाच्यैः कुवलयतले किं भवति ना ।
करेऽध्येतुं दध्रे शिखितनुगता पुस्तकमिम,
न सिद्धानां शक्ता गुणगणनिधीनां मतिपुषाम् ॥६॥

प्रभावोऽचिन्त्योऽयं तदपि ननु तासामवगमे,
गुरूणां कल्पानामधरितसुपर्वद्रुमरुचाम् ।
द्रवेयुर्ग्रावाणो विधुकिरणयुक्ता क्षितितले,
न किं चन्द्राह्वाना कठिनतरतान्यक्तगुणाः ।१०॥

गच्छे स्वच्छे कल्पवृक्षाऽनुकारे,
जाता शाखा सागराख्या तपाख्ये ।
मान्या सद्भिः शुद्धसाधुप्रशाखा,
याऽऽढ्या श्राद्धैः शासनोद्दीप्तिकामैः ॥११॥

तत्रोद्भूतेन गणिनाऽऽनन्दाह्वेन यथामति ।
जयवीरपदाम्भोज-रेणुना रचिता धिये ॥१२॥

विधायैनां मया प्राप्तं यदणु सुकृतं ततः ।
सहाऽऽप्नुयां भव्यलोकैः प्रेत्य जैनेन्द्रशासनम् ॥१३॥



इति पूज्य-आगमोद्धारक-आचार्य-

# श्रीआनन्दसागरसूरीश्वरनिर्मिता

॥ न्यायावतारसूत्रस्य दीपिकानाम्नी वृत्ति. ॥



❀ शांति प्रिन्टर्स, इन्दौर नगर-२ ❀

